पूज्य स्वामी आत्मानन्द जी की सेवा में

नन्दकिशोर
१८-६



# ॥ सर्ववेदान्तसारसंग्रहः ॥



पं. श्री श्यामसुन्दर झा

ॐ तत्सत्

# अथ सर्ववेदान्त सारसंग्रहः

卐

रचयिता–

पं. श्री श्यामसुन्दर झा

लब्ध स्वर्ण पदकः

न्याय वेदान्ताचार्यः,

प्रधानाध्यापकः

श्री वि. डा. हिन्दू गुरुकुल संस्कृत महाविद्यालय,

सूरत.

प्रकाशकः

श्री श्यामसुन्दर झा

श्री. वि. ठा. हिन्दू गुरुकुल, संस्कृत महाविद्यालय, अठवा लाईन्स, सूरत.

मुद्रक :

शा. मोहनलाल मगनलाल बदामी.

मुद्रणस्थान :

श्री "जैनानंद" प्रीन्टींग प्रेस, दरिया महेल, सूरत.



अस्य प्राप्तिस्थानम् : श्री दयानन्द झा मु. पो. ब्रह्मपुर, जि. दरभंगा,
[ 'सूरते कादम्बाच ज्ञेयम्' ]

मूल्यम् २) रूप्यकद्वयम्
७-३-१९५२ ई.

फाल्गुन शुक्ले, एकादशी, भृगुवासरः
सम्बत् २००८

अनन्तब्रह्माण्डनायक-सच्चिदानन्दघन-श्रीहनुमत्सहित
मर्यादापुरुषोत्तम-श्रीरामचन्द्रचरणकमलयोरयं-
ग्रन्थः भक्त्या समर्पितोऽस्तुतराम् ॥

हस्तस्थयत्कृपया नूनं ग्रन्थोऽयम्पूर्णतामगात् ।
श्रीरामहनुमत्पाद-पद्मभृङ्गायताश्चिरम् ॥ १ ॥

निखिलभुवनभाजां नाथमानः समन्तात् ।
सकलजनधियांयत्प्रेरकस्त्वन्ततोहि ॥

उचितमनुचितम्वामत्कृतं भावयोगात् ।
तदपि तव नियोगादीश ! सर्वं तवैव ॥ २ ॥

समर्पकः
श्यामसुन्दर झा

REF. १८६९ ता. १३-९-५१

सूरत

"द्वारकास्थ" पश्चिमाम्नाय-शारदापीठाधीश्वर जगद्गुरु श्री ११०८ शङ्कराचार्य स्वामि-श्री अभिनवसच्चिदानन्द तीर्थ-महाराजानां साशीर्वादं शुभाशंसनम्"



मैथिल पण्डिताः सिद्धहस्तलेखकाः श्री सूरत हिन्दू गुरुकुलाचार्याः श्री श्यामसुन्दर शर्माणस्तावदेकं वेदान्तग्रन्थं, यत्र विभिन्नमतोपनिवन्धनपुरस्सर मद्वैतसिद्धान्त स्वरुपमुपवर्णितमास्ते, न्यभात्सुरिति महानेवमोदातिशयो वोभवीति. तमिममवलोक्य जगद्गुरुचरणाः सुप्रन्नास्सन्तश्शुभाशिषः प्रयुञ्जते, यदेतेषां निवन्धोयं प्रचारं प्रचुरमाप्नुयाद्वित्समाजे, तथा आयुरारोग्याभिवृद्धिश्चैषां भवतात् भगवतो-श्श्रीद्वारकाधीश श्रीचन्द्र-मौलीश्वरयोरनुकम्पया इति सर्वमवदातम्

प्रेषकः —

श्री महावल भट्टः

मन्त्री.



# भूमिका

अयम् वेदान्तसारसंग्रहनामा ग्रन्थः स्वकर्मैकावलोकनकर्तॄणां समेषामधीतन्यायादिदर्शनानां समधिगतयुक्तायुक्तविचारकौशलानां पक्षपातरहितानामुदाराशयानाम् नितान्तस्वसिद्धान्तमात्रव्यसनव्यसनव्यामोहापस्मार दूषितान्तः करणभिन्नानां नितरमामोदमासादयतीति विदन्तिवेत्स्यन्त्येव चैनमालोचयन्तो विद्वांसः

यदत्र प्रथमं चार्वाकादिमतेन शरीरेन्द्रियादीनामात्मत्वं पूर्वपक्षीकृत्य प्रत्यक्षानुमानागमानां प्रामाण्यं व्यवस्थाप्य तैस्तैः प्रमाणैः श्रुतिस्मृतितर्कोपोद्बलितैस्तत्तन्मतानि प्रतिक्षिप्य वस्तुभूतमात्मतत्त्वं प्रसाधितमस्ति.

श्रुतिस्मृतियुक्तिभिश्चेश्वरकारणकत्वं जगतो व्यवस्थाप्य जीवस्यनित्यत्वं स्थिरीकृतम् ईश्वरस्वरूपे कुतर्कउद्भाव्य ध्वस्तीकृतोऽस्ति ॥ जीवोऽपि परमात्मनः सर्वथा भिन्नः किंचिदंशभिन्नः सर्वथाऽभिन्नो वा प्रतिशरीरमेकोवाऽनेको वा विभुर्वाऽणुर्वा। जगदपि सत्यमसत्यं वा, मोक्षस्य किंस्वरूपं सच भक्त्या ज्ञानेन वा सम्पाद्यते इत्यादिसंशयोच्छेदाय प्रवर्तमानेषु ईश्वरकारणवादिषु अनीश्वरकारणवादिषु वा वैदिकदर्शनेषु वेदान्त एवायमुत्तरमीमांसाऽपरनामा उच्चतमं स्थानमधिरोहति यतोऽयं सर्वभावेन ब्रह्मतत्त्वमेव निर्णाययति यत्साक्षात्काराद्भवति निश्श्रेयसमिति न तिरोहितमस्ति परीक्षकाणां केषांचित्।

ब्रह्मापि सविशेषनिर्विशेषभेदेन द्विधाऽस्ति तत्र सविशेषवादो विष्णुशिवशक्तिसूर्यगणपतिपरत्वेन पञ्चधा, तत्र प्रथमो विष्णुपरकसविशेषवादोऽपि द्वैतद्वैताद्वैतशुद्धाद्वैतविशिष्टाद्वैतरूपोच्चलत्तुङ्गतरङ्गभङ्गसङ्गिमहासागरइव राजमानः स्वस्मिन् सगुणं-

ब्रह्माधिशाययन् स्वस्वमतेन वेदान्तवाक्यं समन्वेतुं प्रयतते, निर्विशेषब्रह्मवादस्त्वेकविध एवाद्वैतवादापरनाम्ना प्रसिद्ध इतिजानन्त्येव सर्वेदार्शनिकाः ।

अपिचात्र वेदान्तवाक्यानामैदम्पर्येणाद्वितीयब्रह्मप्रतिपादकत्वेन समनुगतानामपि द्वैतादिपरत्वेन व्याख्यातॄणां मतानि-सम्यगालोच्य मञ्जुलयाभाषया निरूप्य

तत्र प्रदर्शितक्रमेण द्वैतादिवादिनां माध्वादीनां मतान्युद्धाट्यो पदर्शितानि यश्चाय मद्वैतसिद्धान्तो भारतीयानां गौरवमावहति स एवप्राधान्येन प्रतिष्ठापितोऽस्ति, अस्मिन्नेव च कर्मभक्तिज्ञानानां समन्वयः, अन्ते च ज्ञानादेव मुक्तिः तस्याश्चबहुधा विचारः प्रदर्शितोऽस्ति तस्माद्बहूनांमतानां परिज्ञानमेतस्मादेकस्मादेव ग्रन्थाल्लभ्येतेतिमहोपकारकोऽयं ग्रन्थस्तत्तद्विषयजिज्ञासूनां भविष्यति ॥

अस्य च रचयिता पण्डित श्यामसुन्दरझा । मदन्तेवासी दरभंगामण्डलान्तर्गत ब्रह्मपुर ग्रामनिवासी बहुतरेणश्रमेण न्याय-वेदान्तदर्शने अधीतवान् इति ग्रन्थ एवायमेतदीयोऽभिदधातीति तदभिधानं पौनरुक्त्यमेवाश्रयति ।

अहंचैतद्ग्रन्थस्य कंचित्कंचिदंशंपश्यन् प्रमोदमनुभवन् एतस्मै-ग्रन्थकर्त्रे आशीर्वादं वितरामीति शिवम् ॥

श्री लक्ष्मीनाथ झा।

हिन्दू विश्वविद्यालयीयसंस्कृतमहाविद्यालयीय-
दर्शन विभागाध्यक्षः । काशी ।





यत्कीर्तिकौमुदीपानान्मोदन्तेऽद्यापि सज्जनाः ।
'ईश्वरीदत्त' नाम्ना ते पूजिता महतामपि ॥ १ ॥

तदात्मजः सुधीर्देवनारायणाख्यधर्मधीः ।
तस्य सूनोरियं मूर्तिः श्यामसुन्दर-शर्म्मणः ॥ २ ॥



# आमुखम्

अहो ? कुपितफणिफणच्छायोपमेऽस्मिन्संसारकान्तारे कियन्ति दुःखदुर्दिनानि कियती च सुखखद्योतिकेति विदितमेव समेषांशेमुषीजुषां विषयविषमेषुखिन्नमनसां यत्सर्वेस्वभावतएवदुःखंजिहासव सुखाभिलाषुकाश्चप्राणिनिवहा इति, तदुपाय- मधिजिगमिषन्त आत्मतत्त्वाववोधमेवसर्वानुमतं श्रुतिसम्मतंमतमवगच्छन्ति विचार चातुरीचणाः ।

तादृशीचात्मतत्त्वावगतिरात्मानात्मविवेकज्ञानमन्तराऽशक्यैवेति प्रतिपादितं श्रुतौ प्रतिपदम्- "भजति सोऽमृतोभवति, आत्मेत्येवोपासीत, तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, तरतिशोकमात्मवित्, ब्रह्मविद्ब्रह्मैवभवती"- त्यादिवाक्यकदम्बेनेति पौनःपुन्यजननमरणोच्चावचसंसारकान्तारसञ्चारसन्तरण- नान्तरीयकलभ्यामृतीभावात्मकनिरतिशयसुखावाप्त्युपायान् दर्शनशास्त्राख्यान्- न्यभान्त्सुर्जगद्वन्दनीया महामहिममहीयांसोवरीयांसः सरस्वतीरसपूरितान्तःकरणाः कारुण्यपूर्णा अलौकिकज्ञाननिधयस्त्रिकालज्ञाः विभिन्नप्रस्थानाः शास्त्रकृतः

तेषु वेदान्तदर्शनस्यमुख्यत्वेन तत्प्रतिपादकतया प्राधान्यं वरीवर्ति। तत्रापि द्वैतादिपञ्चविधवेदान्तसिद्धान्तानां सकलश्रुतिसमन्वयभाजां प्रचुरप्रसृमरतया नाना- पथजुषांमुमुक्षुजनानामधिकारिसंस्कारबुद्ध्युपदेशकादिवैविध्येनान्यतमेषु तेषु स्वाभा- विकी जिज्ञासा जाजागरीति ।

यतोहि "श्रोतव्योमन्तव्य" इति विधिपराम्नायाच्छ्रवणोत्तरशास्त्रविचारा- त्मकमननमपिमुक्तावुपयोगितामावहतितराम्, तच्चस्वस्वेतरसिद्धान्तमाभासीकृत्यस्व- सिद्धान्तस्थापनं नितरामपेक्षत इति स्वसिद्धान्तवत्परसिद्धान्तज्ञानस्यापि मननपरि- पाकायहितावहतयैकोऽपरस्मिन्पक्षः समुपयोगित्वेन स्वस्थानमादधातीति तदव- लोकनसमुत्कलितस्वान्तःपरिसान्त्वनाय समालोड़ितविविधसिद्धान्तोदधिमध्यतः स्व- मत्यनुसारं तत्तत्सिद्धान्तपदार्थरत्नसाराणिसमादाय, क्वचिच्चाऽविकलेनोध्धृत्य तत्तच्छा- स्त्रमहोदधिप्रविविक्षूणांकिमप्युपकृतये सोपानभूतोऽयमात्मतत्त्वनिरूपण, द्वैत,

द्वैताऽद्वैत, शुद्धाऽद्वैत, विशिष्टाऽद्वैताऽ द्वैतदर्शनसारसंग्रहरूपषट्कस्तवकात्मकलघुकायोऽग्रन्थिग्रन्थः।

तदेतस्मिन् प्रथममात्मविषयकपूर्वपक्षं सकलवैदिकवादिमान्यप्रत्यक्षानुमानागमप्राणाण्यस्थापनपुरस्सरं निरस्य श्रुतिस्मृतिपुराणतर्काद्युपोद्बलितैस्तैस्तैः प्रमाणैः प्राधान्येन न्यायरीतिमनुसृत्य देहेन्द्रियादिव्यतिरिक्तत्वेन वस्तुभूतनित्यात्मतत्त्वं प्रथमस्तवके निरूपितमास्तेऽनन्तरं पञ्चसुस्तवकेषु मुख्यत्वेन जीव, जगत्, ब्रह्म, सृष्टि, प्रलय, यथासम्भवस्वस्वेतरसिद्धान्तविरोधपरिहार, मुक्तिस्वरूप, तत्साधनादिविषयकद्वैतादिपञ्चविधवेदान्तमतसारदिग्दर्शनं – **पक्षपातराहित्येनो**पदर्श्यान्ते च भक्तिज्ञानादिसमन्वयमुखेन कैवल्यसाधनविचारः संक्षेपतोन्यबन्धि।

तत्तत्सिद्धान्तविषयाश्च विषयानुक्रमणिकायामेकत्रोध्धृतास्तान्, उपक्रमोपसंहारादिग्रन्थविषयांश्च निजदृष्टिपातेन पवित्रयिष्यन्ति विद्वांसः स्वयमेवेत्यलमनल्पवाग्विग्लापनेन।

अथ प्रातःस्मरणीयजगद्वन्द्यानां कतिपयमहात्मनाम्, ज्ञातषड्वेददर्शनसाराऽसारतत्त्वानां महात्मनां श्रीमद्ब्रह्मलीनमुनिमहानुभावानाम्, कियतां सहृदय सुहृद्विदुषा–मन्तेवसताञ्च प्रोत्साहनवशंवदो निजमानसलघुवापिकासमधिष्ठितप्रसूनभूतैतत्परिक्षणार्थं लोकगोचरतामानयने समुद्यतोऽहमल्पीयसापि जिज्ञासुसमुपयोगत एतद्ग्रन्थनप्रकाशनादिपरिश्रमं सफलीभूतं मंस्ये।

विशुद्धकुलकमलिनीकमलिनीनाथेन निजसौशील्यशीलितसुहृन्मण्डलेन श्रीमद्भागवतादिकथारसपीयूषपानदूरीकृतभावुकजनहृदयान्धकारेण सकलसद्भावनाभावित प्रियमदन्तेवासिना द्विवेदोपनामक पं. श्री नरेन्द्रकुमार तापीशङ्कर शास्त्रिणा स्वोत्साहेनैव मुद्रणद्रव्यव्ययवहनतोग्रन्थमेतं लोकलोचनगोचरतामानीयोपकृतोऽहन्तदीयसर्वसमृद्धिमीशतः समभ्यर्थये।

अपिच कियतीपुकक्षासुपाठ्यमानसामायिकोपयोगिसंस्कृतराष्ट्रभाषा विविधग्रन्थग्रन्थनलब्धकीर्तिसकलप्रवन्धप्रवन्धनचणमत्प्रियशिष्यरावलोपाह्व पं. श्री केदारनाथ वैद्यनाथ शास्त्रिविहितैतन्मुद्रणानेकविधश्रमोऽपिश्लाध्यतामासादयति मन्मनसीत्येतदीयसर्वसिद्धिरीशानुकम्पया भवत्विति।

सचायं सूर्यपुर (सूरत)स्थ जैनानन्द मुद्रणालये तदीयाध्यक्षश्रीयुत मोहनलाल मगनलाल बदामी महोदयसौहार्देन प्रकाशितः सन्तोषमावहति।

## विज्ञप्तिः

सुनिपुणं निरीक्ष्यमाणेऽप्यक्षरमुद्राणामतिसूक्ष्मतयाऽस्फुटत्वेनचाऽप्रतीयमानत्वादपिचाक्षरयोजकानां दृष्टिदोषेण बवयोर्व्यत्ययेन मात्रानुस्वारपरसवर्णादीनाञ्च सञ्जातावह्वीर्न्यूनातिरेकजास्तथा मद्बुद्धिकृतप्रमादेनाऽपि सम्भावित विषयपदार्थाद्यसम्बद्धनिबन्धनाश्चाऽशुद्धीः शुद्धिपत्रतः स्वमनीषयाच परिशोध्य गुणैकपक्षपातिनो गुरुवराः, तत्समाः, सहृदयसुहृदो विद्वांसश्च सफलयन्तः परिश्रमं क्षाम्यन्तश्चप्रमादान् विबोधयन्तु मां येनेशानुकम्पया द्वितीयावृत्तौ ताः प्रतिविधीयेरन्निति साञ्जलिबन्धमर्थयते.

विदुषां विधेयः

**श्री श्यामसुन्दर झा**

गच्छतः स्खलनंक्वापिभवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधतिसज्जनाः॥ १॥



# सर्ववेदान्तसारसंग्रहग्रन्थस्थ

# विषयानुक्रमणिका ।

## आत्मतत्त्वनिरुपण प्रकरणस्थ विषयाः !

| विषय | पृ. | पं. |
|---|---|---|
| **निम्बा. सि. अनुक्रमणिका–** | | |
| भेदाऽभेदविरोध परिहारः ... ... | २२ | ४ |
| ईश्वरतत्त्वनिरूपणम् ... ... ... ... | २२ | १४ |
| जीवतत्त्वनिरूपणम् ... ... ... ... | २३ | ८ |
| जीवाणुत्वविचारः ... ... ... ... | २४ | १ |
| चिदीश्वरयोः भेदाऽभेदनिर्णयः ... ... ... | २४ | १९ |
| अचित्पदार्थविचारः ... ... ... | २५ | ५ |
| भेदाभेदयोःश्रुत्यादिप्रमाणदिग्दर्शनम् ... ... | २५ | २१ |
| गायत्रीच्छन्दोऽर्थ कथनम् ... ... ... | २७ | १२ |
| कैवलद्वैतपक्षमुपपाद्यतत्खण्डनम् ... ... | २८ | १ |
| कैवलाऽद्वैतमतस्याऽसङ्गतत्वोपदर्शनपुरस्सरंजगत्सत्यत्वनिरुक्तिः | २९ | ४ |
| जगतोब्रह्मपरिणामत्वनिरुक्तिः ... ... | ३२ | १ |
| अभिन्ननिमित्तोपादानब्रह्मकार्यजगत्सृष्टिकथनम् ... | ३३ | ३ |
| सविशेषब्रह्मणिसर्वश्रुतिसमन्वयविचारः ... ... | ३३ | १६ |
| नानात्वनिषेधकश्रुतिविरोधपरिहारः ... ... | ३४ | ८ |
| तत्त्वमस्यादिश्रुतिसमन्वयः ... ... | ३४ | २२ |
| कैवल्यसाधनविचारः ... ... ... ... | ३५ | ५ |
| भक्तितत्त्वादिग्दर्शनपुरस्सरं मुक्तिस्वरूपोपदर्शनम् ... | ३५ | १२ |
| **वल्लभ सि. अनुक्रमणिका–** ... ... | ३६ | |
| शुद्धाऽद्वैतिप्रक्रियादिग्दर्शनम् ... ... | ३६ | १४ |
| आविर्भावतिरोभावनिरुक्तिः ... ... | ३९ | १२ |
| जगत्सत्याऽसत्यत्वनिरुक्तिः ... ... | ४१ | १५ |
| मायिकपदार्थविचारः ... ... ... ... | ४२ | १९ |
| जीवस्वरूपविचारः ... ... ... ... | ४३ | १० |
| जीवस्याशांत्वनिरुक्तिः ... ... ... ... | ४४ | १५ |
| जीवस्याणुत्वनिरुक्तिः ... ... ... ... | ४६ | ११ |

---

॥ ॐ ॥

श्री गणेशाय नमः

# ॥ अथ सर्ववेदान्त सारसंग्रहः ॥

## आत्मतत्त्वनिरूपणम् ।

सीतासंस्थितवामभागसुभगं नीलाम्बुजश्यामलम् ।
ध्वस्ताशेषसुरारिदर्पहनुमत्प्रीत्या प्रसन्नाननम् ॥
सौमित्र्यादिसुबन्धुभिश्च सततं संसेव्यमानं मुदा ।
ध्यायेभीष्टफलप्रदं सुरनुतं वेदान्ततत्त्वं प्रभुम् ॥ १ ॥
अध्यात्मविद्यासु निबद्धवृत्तीन् एकात्मना चिन्तित देवमूर्तीन् ॥
अस्मासु वै सन्ततमार्द्रदृष्टीन् गुरून्नमामोऽखिल देवमूर्तीन् ॥२॥
कामारिवर्गासुरभूरिपीडासंजातशोकानलखिन्नसत्वाः ।
वैराग्यसामादिसहायभूताः श्रद्धापराः शांतिसुधाभिलाषाः ॥
प्रगाढबुद्ध्याख्यसुमन्थदंडात्सत्तत्त्व रूपप्रविवेकरज्वा ।
वेदांतरत्नाकरमेकतानान्मथ्नन्तु नित्यं भुवि भावुका वै ॥३॥
श्रीमद्व्यासमुखोद्गतैः श्रुतिपरैः सूत्रैः सुमूलैर्दृढः ।
नानाभाष्यविभासितातिविमलैः स्कंधैः समालंकृतः ॥
शाखाग्रंथसुपुष्पितोऽतिरुचिरो मोक्षः फलं यस्य वै ।
सोऽयं नो विदधातु वांछितफलं वेदान्तकल्पद्रुमः ॥४॥
द्वैताद्यनेक वेदान्त सिद्धान्तोदधिमध्यतः ।
उपादेयसुरत्नानि संगृह्यन्तेऽत्र प्रायशः ॥५॥
सारसंग्रहसूत्रेण वेदान्तकुसुमानि वै ।
ग्रथ्यन्ते मैथिलेनैवं श्यामसुन्दर शर्मणा ॥६॥

## ॥ ग्रंथोपक्रमः चार्वाकमतेनात्मनोऽनित्यत्वादिरूपः पूर्वपक्षः ॥

अथैकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन, यस्य सर्वमात्मैवाभूत्, यत्र हिद्वैतमिव भवति तत्र इतर इतरं पश्यति, यस्य पृथिवी शरीरं यं पृथिवी न वेद यः पृथिवीमन्तरो यमयति' द्वा सुपर्णा सयुजा सखाया।

इत्यादि श्रुतिशिखरं प्रमाणयन्तो विभिन्नप्रस्थाना ब्रह्मजीवजगत्सु नैकमतयः पूर्वाचार्या दुःखासंभिन्न पूर्णानन्दनिःश्रेयसैकलक्ष्याः तदभिगतये स्वस्वसरणिं प्रमाणयन्ति। तत्राखिलीकृत्य वेदप्रमाण्यानङ्गीकुर्वतां चार्वाकादीनां मतं स्वपक्ष-साधनाय नालम्। तेषामयमाशयः।

**चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते।**
**किण्वादिभ्यःसमेतेभ्योद्रव्येभ्योमदशक्तिवत् ॥१॥**

अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः।
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः॥
मम देहोऽयमित्युक्तिः संभवेदौपचारिकी। इति।

पृथिव्यादिचतुर्भूत समष्टिविशेषशक्त्या देहे चैतन्यमुपजायते देहमनुविनश्यति चेति आत्मनः संघातात्मकत्वेऽनित्यत्वे च कुतो नित्यनैमित्तिकप्रायश्चित्ताद्यनुष्ठानेनेह जन्मनि जन्मान्तरे वा विगलितनिःशेषकल्मषतयात्मनः कैवल्यलक्षणमोक्षादिसंभवः, स्थिरस्यैव तद्योग्यत्वात्, आत्मनश्चतदसंभवात्। ननु प्रत्यक्षादिप्रमाणबलादात्मनो देहाद्यतिरिक्तत्वं नित्यत्व च सिध्यति। तथा हि आपामरतस्तावदहमस्मि, अहं भुंजे, गच्छामि, आसं, भविष्यामीत्यबाधित-प्रत्ययदर्शनात्, न च कश्चिन्नाहमस्मीति विपर्ययम्, अहमस्मि न वेति संशयं वा प्रतिपद्यते इति निर्विचिकित्सतया प्रत्यक्षत आत्मनोऽस्तित्वसिद्धौ, योऽहं बाल्ये पितरावन्वभूवं सोहमिदानीं प्रणप्तॄननुभवामीति प्रत्यभिज्ञाबलात्तस्य त्रिकालाबाधितस्थायित्वे बाधकाभाव इति मनोरथमात्रम्.

### आत्मनि प्रत्यक्षादिप्रमाणाभावकथनम्

आत्मनोऽस्तित्वसिद्धावपि देहानुविधायित्वमेव सिध्यति, उक्तप्रत्यभिज्ञाया अपियावच्छरीरस्थित्यवस्थाविशेष ग्राहकत्वेनैव पूर्वपूर्वसंस्काराऽरूढत्वेन भूतभावि-

विषयग्राहकत्वमिति नोक्तप्रत्यक्षं शरीरादिविलक्षणनित्यात्मसाधकम् । न चानुमानं मानम् । तद्धि व्याप्तिपक्षधर्मताशालि लिंगज्ञानमनुमितिकरणमित्यभ्युपगतमनुमान-प्रामाण्यवादिभिः, तत्र कः खलु ज्ञानोपायो भवेत् न तावत्प्रत्यक्षम्, तद्धि बाह्यमाभ्यन्तरं वा, न प्रथमं, तस्य स्वसम्बद्धवर्तमान विषयग्राहकत्वेन भूत-भाविविषयाग्राहकत्वात् । नापि चरमम् । तस्य बहिरिन्द्रियाधीनत्वेन स्वातंत्र्येण बाह्यविषये प्रवृत्त्यसंभवात् । तदुक्तम्—'चक्षुरादियुक्तविषयं परतंत्रं हि बहिर्मन' इति । नाप्यनुमानं व्याप्तिज्ञानोपायः अनुमानस्यानुमानान्तरतंत्रत्वे तत्र तत्रा-प्येवमित्यनवस्थादूषणग्रासात् । अस्तु तर्हि शब्द एव व्याप्तिज्ञानोपायः इत्यपिन, त्वदुक्तवचनमात्र आप्तोक्तबुद्ध्यसिद्धावस्माकं विश्वासाभावात्, वैशेषिकमतानु-सारिभिः शब्दोपमानयोरनुमान एवन्तर्भावात्, वृद्धव्यवहाररूपलिंगावगति-सापेक्ष शब्दस्याऽपरापरसापेक्षतया पूर्वोक्तानवस्थाया जागरूकत्वाच्च । न चैवं नदीतीरे फलानि संतीति विप्रलंभाविप्रलंभकवाक्यश्रवणसमनंतरमेकत्र प्रवृत्तिर्भवत्य-परत्र नेति तन्न स्यादिति वाच्यम् । अस्तु यथा कथंचित् शब्दस्य प्रामाण्यं तथापि तस्य स्वतंत्रप्रामाण्यसंभवेऽनुमानसाधकत्वेनात्मनित्यत्वसाधकत्वस्वीकारे शिरोवेष्टनेन नासिकास्पर्शतुल्यतया महागौरवात् । न चैवमपि साक्षादेव शब्द-स्यात्मनित्यत्वसाधकत्वमस्त्विति वाच्यम्, आत्मनोऽद्यापि संघातविलक्षणत्वे नित्यत्वे चासिद्धौ कैव कथात्वन्मते तदभिन्नेश्वरसिद्धेरिति तदुक्तत्वेन शब्दस्य प्रामाण्या-संभवात् । एतदतिरिक्तप्रमाणानि तु कानिचिद्वैशेषिकादिभिरपि खंडितानि कानिचि-च्चानुमान एवान्तर्भावितानि इति प्रकृतेऽपि तद्दिशानुमानखंडनदिशाच खंडितानि बोध्यानीति नात्मनो देहादिसंघातव्यतिरिक्तत्वे नित्यत्वे च प्रमाणमस्तीति चेन्मैवम्.

## आत्मसत्त्वे प्रत्यक्षप्रमाणम्

चक्षुषायमहमद्राक्षं त्वचा तं स्पृशामीत्यादिप्रत्यभिज्ञयादर्शन स्पर्शनाभ्यामेकार्थ-ग्राहकत्वेन देहादिसंघातातिरिक्तनित्यात्मसद्भावात् । तथाहि यदि देहादिसंघात एवात्माभ्युपगम्येत तदा चक्षुषा दृष्टस्य त्वचः प्रतिसंधानं न स्यात् अन्य-दृष्टस्यान्येन प्रतिसंधानाभावात्, अन्यथा मैत्रदृष्टं चैत्रेणापि प्रतिसंधीयेत न चैतत्क्वचिदुपलभ्यते उक्त प्रत्यभिज्ञया चाक्षुषज्ञानकाले स्पार्शनप्रत्यक्षस्य, स्पार्शन-ज्ञानकालेच चाक्षुषप्रत्यक्षस्य, स्मृतिविषयत्वेन पूर्वोत्तरकालिकभिन्नेन्द्रियग्राह्यवस्तुग्रा-

हत्कवेनैककर्तृकत्वं निश्चीयते, न चैतादृशप्रत्ययवेतृत्वं देहादिसंघातस्य संभवति, तस्य प्रतिक्षणपरिणामितया भेदेन पूर्वोत्तरग्राहकत्वासंभवात् । कर्तृभोक्त्रोर्भेदेन कृतहाना कृताभ्यागमप्रसंगाच्च । ननु देहादिसंघातातिरिक्त स्वतंत्रात्मनः सत्वे तेन प्रेरितं चक्षुरादिकं गंधादिकमपि गृह्णीयात् न चैवमस्ति चक्षूरूपमेव गृह्णातिघ्राणं गंध-मेवेति विषयव्यवस्थया न संघातातिरिक्त आत्मेति चेन्न, यतो व्यवस्थितविषय-त्वादेवेन्द्रियाणां नात्मत्व सिध्यति. अव्यवस्थितविषयत्वे सर्वविषयग्राहकत्वेन चैतन्यं स्यात् न चैतदस्ति आत्मा च विषयव्यवस्थितिमतीतो रूपदर्शी रसं गंधं वा पूर्वगृहीतमनुमिनोति गंधप्रतिवेदी च रूपरसावनुमिनोति एवं रूपं दृष्ट्वा गंधं जिघ्रति घ्रात्वा च गंधं रूपं पश्यति तदेवमनियतपर्यायं सर्वविषयग्रहणमेकं चेतनाधिकरणमनन्यकर्तृकं प्रतिसंधत्ते । तथा प्रत्यक्षानुमानागमसंशयान् नानाविषयान् प्रत्ययान् स्वात्मकर्तृकान् प्रतिसंधाय सर्वार्थविषयं शास्त्रं प्रतिपद्यते, तत्रार्थोऽविषयः श्रोत्रस्य, क्रमभाविनो वर्णान् श्रुत्वा पदवाक्यभावं प्रतिसंधाय शब्दार्थव्यवस्थां च बुध्यमानोऽनेकविषयमर्थजातमेकैकेनेन्द्रियेण ग्रहीतुमयोग्यमिन्द्रियेणैव गृह्णाति, सा चेयं व्यवस्था न देहेन्द्रियसंघातात्मपक्षे सूपपदेति तदतिरिक्त एव आत्मेति सिद्धयति । न केवलं शरीरात्मवादपक्षो विषयग्रहणव्यवस्थयानुपपन्नः किन्त्वसंभ-वोऽपि—तथाहि अनेकावयसंघातात्मकत्वं तावद्देहस्य सर्ववादिसिद्धम् । तत्र सर्वा-वयवानां चैतन्यमेकैकस्य वा । नाद्यः । तथासत्यनेकचेतनोपलब्धिः, अवयवानां परस्परमविवादनियमः तत्र ममता बुद्धिर्ममताव्यवहारश्च न स्यात् । नापि द्वितीयः । तदनुभूतमवयवान्तरं न स्मरेत्, यत्किंचिदवयवविनाशे अन्यानुभूत-स्यान्येन स्मरणायोगात्. विरुद्धदिक्क्रियाप्रसंगे शरीरमुन्मथ्येत निष्क्रियत्वम्वा प्रज्ज्येत । बालदेहोहं मन्दज्ञानो युवदेहोहमधिकज्ञानः, मम शरीरमिति शरीरा-हमर्थयोर्जायमानो भेदप्रत्ययव्यवहारबाधोऽपि देहात्मपक्षे दोषोः बोध्यः । किञ्च शरीरस्य तथात्वे मृतशरीरे व्यभिचारात् । तत्राव्यक्तचैतन्यस्वीकारेऽपि तद्दा हे पातकप्रसंगात् । न च त्वन्मते नित्यत्वेनात्मनो दाहाद्यसंभवेन जीवतश्चैत्रादि-शरीरदाहेऽपि पातकाभाव इति वाच्यम्, शरीरावच्छेदेनैवात्मनो भोगसंभवः, तत्साधनानीन्द्रियाणि तेषामुपघात एव हिंसा, एवं च प्रकृते जीवच्छरीरदाहे आत्मनः सुखदुःखयोरन्यतरभोगोच्छेदात्मकहिंसया पातकंसंभवेदेव ।

अथ ज्ञानानामिन्द्रियाधीनत्वेनेन्द्रियाण्येवात्मास्त्विति चेन्न, न केवलं शरीरमात्मा नापि केवलमिन्द्रियम्। तद्धि बाह्यमान्तरं वा, नाद्यः। तत्रापि मिलितानामेकैकस्य वेति विकल्पे मिलितानामात्मत्वं न संभवति पूर्वोक्तप्रत्यभिज्ञानुपपत्तेः, एकैकस्येति पक्षे यदिचक्षुरेवात्मा तदान्धस्य रूपस्मरणानुपपत्तेः, यदि श्रोत्रमात्मा तर्हि बधिरः शब्दं न स्मरेत्, एवमिन्द्रियान्तराणामात्मत्वे अनुपपत्तिर्द्रष्टव्या। यथा चक्षूरसनघ्राणत्वक्श्रोत्रेन्द्रियैर्यथायथं शब्दस्पर्शगंधरसरूपादि स्वस्वविषयेतर विषयग्रहणासंभवेन तत्तदर्थे तत्तदिन्द्रियान्तरं स्वीक्रियते तथैव चक्षुरादिग्रहणायोग्यसुखादिग्राहकत्वेन मनसोऽपि इन्द्रियान्तरत्वमेव। किञ्चमनस आत्मत्वे स्मर्तुः स्मरणादिकार्यस्य करणतया कल्पितभेदमेव स्मरतीति स्वीकारासंभवात् स्मरणस्य करणाभावात्। न च करणमपीदमेव, विरोधात्। अन्यत्किञ्चित्करणमिति चेत् बाह्यकरणं तदा तच्छून्यो न स्मरेत्। यद्यन्तःकरणं तदात्मनो मन इति नाम स्यात्। यद्यन्तःकरणमनपेक्षितं तदेन्द्रियार्थसम्बन्धकाले सर्वदा ज्ञानमुत्पद्येत तस्मान्मनश्च नात्मा।

## अनुमानप्रामाण्यस्थापनम्

एवमनुमानमपि तत्र प्रमाणम्। ननु पूर्वोक्तदोषदूषिततया अविनाभावासिद्ध्या नानुमानम्प्रमाणमिति चेन्न, कार्यकारणभावेन तादात्म्यतया वा व्याप्तिनिश्चयसंभवात्। तदुक्तं च बौद्धैरपि—"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमो दर्शनादतदर्शनादिति." न च व्यभिचारशंकया कार्यकारणभावोऽपि न सिद्ध्येदिति वाच्यम्, कारणं विनापि कार्यमुत्पद्यतामित्येवंविधतर्केण शंकानिवृत्तिसंभवात्। न च तत्र तत्रापीतिरीत्यानवस्थयां पर्यवसानेन तर्कोऽपि न व्यभिचारशंकानिवर्तकः स्यादिति वाच्यम्, शंकाया व्याघातावधितया निवृत्तत्त्वात्, तदेव ह्याशंक्येत यस्मिन् स्वक्रियाव्याघातादयो दोषा नावतरेयुः। उक्तञ्च—

**'व्याघातावधिराशंका तर्कः शंकावधिर्मत' इति।**

एवञ्च कार्यस्योत्पत्तेः प्रागनुपलंभः, कारणोपलंभे सत्युपलंभः उपलंभस्य पश्चात्कारणानुपलंभादनुपलंभ इत्यादिरीत्या धूमधूमध्वजयोः कार्यकारणभावो निश्चीयते। एवम्—शिंशपा यदि वृक्षत्वमतिक्रामेत्स्वात्मानमेव त्यजेदिति विपक्ष-

बाधकतर्कबलात् वृक्षोऽयं शिंशपेति सामानाधिकरण्येन शिंशपावृक्षयोश्च तादात्म्यनिश्चयाद्व्याप्तिनिश्चयो भवति। प्रमितिकरणतावच्छेदकधर्मवत्तया यथा प्रत्यक्षादेः प्रमाणत्वं भवति तथा अनुमानं प्रमाणं प्रमितिकरणतावच्छेदकधर्मवत्त्वात्प्रत्यक्षादिवदिति, अनुमानेनापि अनुमानस्य प्रामाण्यसंभवेन, न च कस्यचिद्वचनमात्रेणानुमानप्रामाण्यव्याघातसंभवः। किञ्च–'प्रामाणतदाभासव्यवस्थापनं तत्समानजातीयत्वात्' इति वदता त्वयापि स्वभावानुमानं स्वीकृतम्, परगता विप्रतिपत्तिस्तु वचनलिंगेनेति वदता कार्यलिंगकमनुमानम्। अनुपलब्ध्या कंचिदर्थं प्रतिषेधयतानुपलब्धिलिंगकमनुमानम् त्वयापि स्वीकृतमेवेति नानुमानं प्रमाणमिति त्वद्वचनमुन्मत्तवचनवत्केवलमुपहासायैवेति।

## अनुमानस्य तात्त्विकत्व विचारः

नन्वस्तु यथा तथानुमानं प्रमाणं न च तेनानुमिति विषयस्य तात्त्विकत्वनिश्चयः, रोधादिनापि जलवृद्धिसंभवेन नदीवृध्या वृष्ट्यनुमानं मिथ्यैव, नीडोपघातेन च पिपीलिकाण्डसंचारदर्शनात्, पिपीलिकाण्डसंचरणाद्भविष्यति वृष्टिरित्यनुमानं मिथ्या, एवं सर्वत्र व्यभिचारसद्भावान्नानुमाने प्रामाण्यसंभव इति चेन्न, न हि धूममात्रं वह्न्यनुमितौ हेतुर्भवति, येन व्यभिचारो भवेत्. किन्तु अधोदेशसंलग्नवह्निधूमयोः बहुशः सहचारदर्शनं च व्याप्तिग्राहकम् तथा प्रकृतेऽपि यदा पूर्वादिके वर्षादिकं प्राप्नोति, प्रवाहस्य शीघ्रतरत्वं बहुतरफेनादियुक्तत्वञ्चोपलभ्यते तदा नद्या एतादृशवृष्टिपूर्णत्वे उपरि वृष्टो देवः इत्येवं वृष्टेर्भूतत्वमनुमीयते नोदकवृद्धिमात्रेणेति न च तत्र कश्चिद्व्यभिचारसंभवः। एवं बहुशः पिपीलिकासमुदायस्याण्डसंचारदर्शनेनभविष्यति वृष्टिरित्यनुमीयते न तु कासाञ्चित्पिपीलिकानामण्डसञ्चारेण येन व्यभिचारो भवेत्, एवं सपक्षसत्व विपक्षव्यावृत्तत्वादिपञ्चकसिद्धसद्धेतुभिरनुमितौ व्यभिचारादिदोषासंभवेन निराबाधमनुमानप्राणाण्यसिद्धौ तेनापि संघातातिरिक्तो नित्यश्चात्मा सिद्ध्यति।

## अनुमानतः संघातातिरिक्तनित्यात्मसिद्धिविचारः

तथा हि–देहेन्द्रियादिः परार्थः स्वातिरिक्तप्रवृत्तिको वा, संहतत्वात्, जडत्वाद्वा, घटादिवत्। देहेन्द्रियादिसंघातः चेतनसम्बद्धः जडत्वे सति प्रवृत्तिमत्वात् रथादिवत्। इन्द्रियमनोबुद्ध्यादीनि आत्मा न भवति करणत्वात् दण्डकुठारादिवत्।

इत्याद्यनुमानैर्देहेन्द्रियाद्याधिष्ठातृत्वेन तद्भिन्न आत्मा, दर्शन स्पर्शनाभ्यामेककर्तृक-त्रैकालिकवस्तुग्राहकत्वेन नित्यश्च सिद्ध्यति। ईश्वरकृष्णेनापि संघातपरार्थत्वादित्यादिहेतुभिरात्मनः सत्वमाह न च पूर्वोक्तानुमानप्रामाण्याद्देहेन्द्रियाद्यधिष्ठातृत्वेन नित्याया बुद्धेरेव सिद्धिसंभवेऽर्थान्तरसिद्धिप्रसंग इति वाच्यम्, अज्ञासिषम्, जानामि, ज्ञास्यामीत्यादिप्रयोगवशेन प्रागभाव स्थितिध्वंसवत्तयाबुद्धेरनित्यत्वज्ञापनात्। बुद्धिरनित्या, उपजनापायधर्मवत्वात् उत्पत्ति विनाशवत्वाद्वा, घटादिवत्, सुखादिवद्वेत्यनुमानेनापि बुद्धेरनित्यत्वं सिद्ध्यति।

**'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्**

इति पारमर्षसूत्रमपि युद्धेरनित्यत्वे प्रमाणम्।

**'प्रकृतेर्महान्' 'हेतुमदनित्यमव्यापि'**

इत्यादिना ईश्वरकृष्णचरणैरपि बुद्धेरनित्यत्वं प्रतिपादितम् एवं तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेन क्षणिकत्वमपि सिद्ध्यति, यथा एकस्यापि पदार्थस्य क्षणभेदेन भेदात् एकविषयबुद्धिस्थलेऽपि द्रव्यादिषु क्रियासन्तानवत् (आपतनात् इषोरुत्तरोत्तरदेशगमनानुकूलक्रियाणां सन्तानो गृह्यते कया क्रियया तादृशदूरदेशगमनासंभवात् क्रियासन्ताने सिद्धे तादृशक्रियाणां क्षणिकत्वं प्राप्तम्) बुद्धिसन्तानस्योपपत्तिस्तत्र पूर्वबुद्धेर्विनाशं विनान्या बुद्धिर्न संभवतीति बुद्धीनां क्षणिकत्वे सिद्धे न देहादिसंघाताश्रयत्वेन नित्यत्वमिति तादृशसंघाताश्रयत्वेन यः कश्चित् सिद्ध्यति स एव नित्य आत्मेति। नन्वेवमपि घटादिवद्दीर्घकालस्थायित्वेनापि सर्वोपपत्तिसंभवे प्रागभावध्वंसाप्रतियोगितयानाद्यनन्तनित्यात्मस्वीकारे मानाभाव इति चेन्न, उपचयापचयादिषड्भावविकारवच्छरीरभेदेऽपि भूतभाविविभिन्नेन्द्रियग्राह्यविषयस्यैकरूपेण ग्राहकत्वेनेहजत्मनि त्रिकालाबाधसत्वसिद्धिवत्, जातमात्रस्य हर्षशोकभयादिप्रतिपत्तिदर्शनेन हर्षादीनां पूर्वाभ्यासात्स्मृतिरित्यनुमीयते, पूर्वाभ्यासश्च पूर्वजन्मव्यतिरेकेण न संभाव्यते, एवं पूर्वजन्मापेक्षयापि पूर्वं पूर्वसिद्ध्यात्मनोऽनादित्वेऽनादिभावस्य च नाशासंभवान्नाशहेतोरभावाद्वा नित्यत्वम्। न चानित्यमालत्यादिप्रबोध सम्मीलनविकारवदात्मनोऽपि हर्षशोकादिविकारसंभवान्न नित्यत्वमिति वाच्यम्, निमित्तं विना कार्यानुत्पादात्, मालत्यादि-

ष्वपि वसंतादिॠतुः प्रबोधकारणं तदभावो निमीलनकारणम् , जातमात्रबालस्य हर्षादेरपि पूर्वजन्माभ्यस्तस्मृतिरेव निमित्तं, निमित्तान्तराभावात् , तेन चानादित्वसिद्धौ नित्यत्वमेव, जातमात्रमात्मा पूर्वाभ्यासाहारादिस्वीकारवान् स्तन्याभिलाषवत्त्वात् मध्यमबालवत् । आत्मा पूर्वशरीरादिसम्बन्धवान् पूर्वानुभूतस्मृतिमान्वा उत्पत्त्यनन्तरमिह निर्निमित्तकहर्षादिमत्वात् ह्यस्तनीयानुभूतविषयस्याद्यतनीयस्मरणवत् इत्याद्यनुमानेनापि पूर्वपूर्वजन्मसिद्धौ नित्यत्वमात्मनः। नन्वभ्यासमन्तरेणायसोऽयस्कान्तोपसर्पणवदात्मनोऽप्यभ्यासमन्तरेणैव स्तन्याभिलाषसंभवेन व्यभिचार इति चेन्न, अयसोऽयस्कान्ताभिगमनेऽपि निमित्तसद्भावेन, तथा हि यदीदमभिगमनं निर्निमित्तं स्याल्लोष्टादीनामप्ययस्कान्तोपसर्पणाय प्रवृत्तिः स्यान्नचैवं दृश्यते, किम्वा लौहस्याप्यन्यत्र लोष्टादौ प्रवृत्तिः स्यात्तस्यायस्कान्तोपसर्पणाय त्वन्मते निमित्ताभावात् , न चैवमपि दृश्यते किन्त्वयोऽयस्कान्त मेवोपसर्पतीति नियमात् तादृशोपसर्पणस्य निमित्तं स्वीकार्यमेव, तच्च निमित्तमयस्कान्ते लोहाकर्षणशक्तिरेव। एवं बालस्यापि स्तनोपसर्पणं स्तन्याभिलाषश्च सनिमित्त एव तादृशाभिलाषनिमित्तञ्चादृष्टाधीनपूर्वानुभूतस्मरणमेव, अन्यस्यासंभवात् पूर्वानुभवश्च पूर्वजन्मन्येवेति पूर्वजन्मपरम्परयात्मनोऽनादित्वं तेन च नित्यत्वमिति ।

## ॥ विश्लेषणसमन्वयाभ्यामात्मास्तित्वसिद्धिः ॥

वस्तुतस्तु विश्लेषणसमन्वयाभ्यामपि जीवात्मनो बहुशः परमात्मस्वभावेन तद्वदेव नित्यत्वादिकमपि । तथा हि उपलक्षणोपाधिभ्यां पार्थक्येन वस्तूनां स्वाभाविकयथार्थस्वरूपावगतिरीतिरेव विश्लेषणात्मकपद्धतिः । यथा स्वभावशीतजले कुतश्चिदुष्णत्वानुभवे झटिति जनो जिज्ञासते कथमिति, जलञ्च क्रमशः स्वीयशीततागुणं प्रतिपद्यते, तेन जल उष्णत्व मुपलक्षणमेवेति प्रतीयते । यथा वा कतकरजोभिः कृतं ताम्रादेश्चाकचिक्यं कालेन स्वयमेव विलीयते चाकचिक्यस्य त स्वभावाभावादौपाधिकमेव चाकचिक्यमिति प्रतीयते, जीवद्दशायामपि जीवः पुत्रादीष्टवियोगाव्यवहितोत्तरकालं तज्जन्यदुःखमसहमानः प्राणानपि दातुं तत्परः किञ्चित्कालानन्तरं स एव पूर्ववेदनां विस्मृत्येदानीमहं सुखीति मन्यते, तेन जीवात्मनोऽपि खण्डकालप्रतीयमानदुःखादिकमौपाधिकमेवेति । एवञ्च तादृशोपलक्षणोपाधिनिरासेन शुद्धबुद्धनित्यमुक्तस्वभाव ईश्वरवदेवेति सुगमतया बोध्धुं

शक्यते। ननु धर्मिग्राहकमानाभावेनेश्वर एव नास्तीन्ति कुतस्तद्वन्नित्यत्वादिकं जीवात्मनीति चेन्न, अनुमानस्यैव मानत्वात्, तथा हि पृथिव्यादिकं प्रयत्नवता धृतं गुरुत्वे सत्यपातित्वात्, करतलन्यस्तामलकवत्। एतादृशाचिन्त्यगुरुत्ववज्जगद्धारणप्रयत्नवत्त्वमीश्वरादन्यत्रासंभवीति तद्धारकत्वेनेश्वर एवानुमीयते। प्रकृष्टप्रयत्नवतापि पुरुषेण नियतं स्वाभीष्टफलाप्राप्त्याप्यन्याधीना प्रयत्नवत्पुरुषाभीष्टफलावाप्तिरित्यनुमीयते यदधीना कर्मफलसिद्धिः स ईश्वर एवेति।

एवं भूरुहादिकं भूमेरुत्पद्यते भूमावेव तिष्ठति पतित्वान्ते तत्रैव विलीयते. मत्स्यादिकमपि स्वप्रकृत्यनुकूलजले रमते तत एव पाल्यते तत्पार्थक्याद्वैकल्यं याति, पुनः स्वप्रकृत्यनुकूलतत्त्वं तदेवासाद्य परमानन्दकोटिमनुभवति, एवं प्राणिनोऽपिपरेशादुत्पन्नाः पालिताश्चसंसारदशायां नानादुःखसंभारमासाद्य क्लिश्यन्तः तमेव स्वरूपमासाद्य परमानन्दमनुभवन्तीति समन्वयेनापि प्रत्यगात्मनां कियदंशे परमात्मसमानत्वेन तद्वदेव नित्यत्वादिकमपि, तैत्तरीये भृगुवरुणसम्वादे **"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीत्यारभ्य आनन्दाद्ध्येवखल्विमानि भूतानि जायन्ते"** इत्यन्तमयमेव समन्वयप्रकारः सुस्पष्टीकृतो विद्यते। तत्र भूतपदेन चराचरात्मकं जगद्बोध्यम्।

## ॥ शब्दप्रामाण्यस्थापनम् ॥

ननु मन्मते शब्द ( वेद ) प्रामाण्यानंगीकारे कथं श्रुत्या समन्वयप्रकारव्यवस्थापनमिति चेन्न। (पौरुषेयत्वपक्षे) षडैश्वर्यसम्पन्नसर्वज्ञसमस्तदोषनिर्लिप्तपरमेश्वर-मुखात् श्वासोच्छ्वासवन्निःश्वसितत्वेन सकलपुंदोषशंकाकलंकपंकासंस्पृष्टतया वेदस्य सर्वानपेक्षस्वतः प्रामाण्यनिश्चयात्। नचेश्वरकर्तृकत्वेन वेदस्यानपेक्षप्रामाण्यं तेन चेश्वरसिद्धिरित्यन्योन्याश्रय इति वाच्यम्, अनाद्यविच्छिन्नसम्प्रदायपरम्पराप्राप्तश्रुतीनां न कश्चित्स्वातन्त्र्येण निर्माता, परमात्मापि पूर्वपूर्वकल्पीयवेदानुपूर्वीसापेक्षोत्तरोत्तरकल्पीयानुपूर्वीनिर्माणं सृष्ट्यादौ कुरुते, प्रमाणान्तर सिद्धार्थोपलंभपुरस्सरनिर्मातृत्वरूपकर्तृत्वं परमेश्वरेऽपिनास्ति, तेन चापौरुषेयतया समस्तपुंदोषासंस्पृष्टत्वेन सर्वानपेक्ष्यप्रामाण्यम्। अत एव न परमेश्वरनिर्मितत्वं

वेदप्रामाण्यप्रयोजकं येनैकान्योन्याश्रयः स्यात्, किन्तु अनादित्वेन स्वतःसिद्ध प्रामाण्यतया वेदाधीनैव परमेश्वरस्वरूपादिसिद्धिरिति सर्वमवदातम्। नन्वेवमपि पुत्रकामः पुत्रेष्ट्या यजेत 'इति श्रुतिविहितेष्टौ सत्यामपि पुत्रजन्मादर्शनेन दृष्टार्थवाक्यमिथ्यार्थबोधकत्वे अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यदृष्टार्थवाक्यमपि मिथ्येति ज्ञायते। हवनेऽपि उदिते होतव्यम्, अनुदिते होतव्यम्, समयाध्युषिते होतव्यम् इति विधाय विहितं व्याहन्ति-श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति। शबलोऽस्याहुतिमभ्यवहरति य अनुदिते जुहोति। श्यावशबलौ वस्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति। समयाध्युषितश्च-'तथा प्रभातसमये नष्टे नक्षत्रमण्डले। रविर्यावन्न दृश्येत समयाध्युषितं च तत्' इति। इतिव्याघातादन्यतरन् मिथ्या। पुनरुक्तदोषश्चाभ्यासे विधीयमाने यथा **त्रिःप्रथमामन्वाह त्रिरुत्तमामिति** प्रथमोत्तममंत्रयोस्त्रिवारपठनेन च व्याघातो भवति इत्यनृतव्याघातपुनरुक्तदोषेभ्यः शब्दो नप्रमाणमिति चेन्न, भावानवबोधात् तथा हि-कर्मकर्तृसाधनवैगुण्येनेष्टौ सत्यामपिपुत्रोत्पत्तिर्न जायते, तत्र कर्मवैगुण्यं, इष्टयाश्रितकर्मणि यथा कर्तव्यं तथा न कृतमिति क्रियाभ्रंशः। कर्तृवैगुण्यमविद्वान् प्रयोक्ता कपूयाचरणश्च। उपहितमसंस्कृतञ्च हविः साधन-वैगुण्यमेभिर्दोषैः पुत्रोत्पत्तिः प्रतिबध्यते अन्यथोत्पद्यते पुत्रः। हवनेऽपि विहि-तान्यतमकालमुपेत्य तद्व्यतिक्रमे दोष उक्तो यथानुदिते मयानुदिने होतव्यमिति संकल्प्य पश्चात्तत्यागे श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति, एवं सर्वत्र ज्ञेयमिति न व्याघातदोषः। एवं त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यपि, यागेऽ-ग्निसमिन्धनार्थाः सामिधेनीनामका एकादशसंख्याका मंत्रा वेदे प्रसिद्धाः तत्र श्रूयते 'पञ्चदश सामिधेनीरन्वाह' इति एकादशानामृचां पञ्चदशत्वञ्च प्रथमान्त्य ऋचोः त्रिरभ्यासेन जायते तदेवोक्तं त्रिः प्रथमामन्वाह त्रिरुत्तमामिति। अन-र्थकोऽभ्यासः पुनरुक्तः, अर्थवांश्चाभ्यासोऽनुवादः प्रकृते चार्थवत्त्वेनाभ्यासस्य न पौनरुक्तिः। तथा चोक्तं **इदमहं भ्रातृव्य पंचदशारेण वाग्वज्रेण वाधे योऽस्मान्द्वेष्टि य च वयं द्विष्मः** इति. तदेतत्सर्वं पूर्वमीमांसायाः पंचमाध्यायतृतीयपादतृतीयाधिकरणेऽन्यत्र च विस्तरतया प्रतिपादितं द्रष्टव्यम्। वेदवाक्यं प्रमाणमाप्तप्रामाण्यात् मंत्रायुर्वेदप्रामाण्यवत् इत्यनुमानेनापि य एवाप्ता मन्वादयो वेदार्थद्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनामपि प्रवक्तारो मंत्रायु-

वेदादीनां चेदं कृत्वेत्थमिष्टलाभ इदं वर्जयित्वानिष्टपरित्याग इति तत्र तत्रोक्तम्। तथा करणेन तथैवेष्टलाभोऽनिष्टनाशश्च भवतीति मंत्रायुर्वेदप्रामाण्यात्समान-प्रवक्तृकत्वेनाशेषवेदराशिः प्रमाणमेव न प्रोक्तदोषाशंकाकलंक लेशोऽपि। इत्थं च 'न जायते म्रियते व विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्' अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे॥ हन्ता चेन्मन्यते हन्तुं हतश्चे-न्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥ मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितं। मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्॥ एको ह देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। स यश्चायं पुरुषे यश्चादित्ये स एकः' 'सर्वाणिभूतानि आत्मैवाभूद्विजानतः' 'यस्मिन्नेकस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति' 'ईशावास्यमिदं सर्वम्' 'ऐतदात्म्यमिदं सर्वं तत्वमसि श्वेतकेतो' 'अहं ब्रह्मास्मि' 'प्रज्ञानं ब्रह्म' 'ओमित्येतदक्षरमिदं सर्वं तस्योप-व्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्रिकालातीतं तदप्योंकार एव। सर्वं ह्येतद्ब्रह्म। अयमात्मा ब्रह्म' इत्यादिश्रुतयस्तन्मूलकस्मृतयश्च। नत्वे-वाहं जातु नासं न त्वं नेमे जनाधिपाः। न चैव न भविष्यामः सर्वे वयमतः परम्॥ देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा। तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥ नासतो विद्यते भावो ना भावो विद्यते सतः। अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः। अनाशिनोऽप्रमेयस्य। य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतो नायं हंति न हन्यते॥ न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः। अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि। तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही। नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः। न चैनं क्लेदयंत्यापो न शोषयति मारुतः॥ नित्यः सर्वगतः स्थाणुरचलोयं सनातनः॥ क्षेत्रज्ञं चापिमां विद्धि सर्वक्षेत्रेषु भारत. ममैवांशो जीवलोके जीवभूतः सनातनः। 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इत्याद्याः आत्मनो नित्यत्वे, देहादिसंघातातिरिक्तत्वे, किं बहुना चराचरात्मकजगत एवेश्वरकारणकत्वे च प्रमाणम्। कथमन्यथा समितिसमुपस्थितानां समेषां योध्धुमनसां विनाशे महाननर्थोऽवश्यं भावीत्यर्जुनमोहोच्छेदाय **न जायते म्रियते** इत्युक्तरं

संगच्छेत। न चैतावतार्जुनप्रश्नस्य निर्मूलकता, भीष्मद्रोणादिपदवाच्यार्थमादाय प्रश्नः लक्ष्यार्थाभिप्रायेण चोत्तरमित्युभयं संगच्छते। **एतेन** प्रधानमल्लनिबर्हणन्यायेन ज्ञानस्य क्षणिकत्वे क्षणिकसंतानरूप आत्मेति बौद्धपक्षः। गजदेहे गजपरिमाणः पिपीलिकादेहे तत्परिमाणोऽतो देहपरिमाण आत्मेति जैनपक्षः। सोपाधिकब्रह्म-खंडो जीव इति भास्करादि विरुद्धपक्षा निरस्ताः वेदितव्याः। एतेषां निरसन-प्रकार आकरग्रंथेभ्य एव विशेषजिज्ञासुभिर्द्रष्टव्यः। विस्तरभियात्रोपरम्यते।

**॥ इति श्री सर्ववेदान्तसारसंग्रहे आत्मतत्वनिरूपणम् नाम प्रथमस्तबकः॥**

॥ १ ॥

## ॥ अथ वेदान्तसिद्धान्तोपक्रमः ॥

अथैवं श्रुतिस्मृतिप्रमाणेभ्योवगतमीश्वरकारणकं जगत् जीवश्च संघातातिरिक्तो नित्य इति। तत्रेश्वरः सविशेषो निर्विशेषो वा जीवोऽपि परमात्मनः सर्वथा भिन्नः किंचिदंशाभिन्नः सर्वथाभिन्नो वा प्रतिशरीरमेकोऽनेको वा विभुपरिमाण-कोऽणुपरिमाणको वा जगदपि नित्यमनित्यं ( सत्यमसत्यं ) वा, निश्रेःयसं किं कथञ्च तदित्यादिसंशयोच्छेदाय प्रवर्तमानेश्वरवादिवैदिकदर्शनेषूत्तरमीमांसाऽपरनाम-कवेदान्तदर्शनस्यैव सर्वतः प्राधान्यं यतस्तत्र सर्वतोभावेन ब्रह्मतत्त्वोपपादनमेव मुख्यमुद्देश्यमस्ति। ब्रह्मतत्वाववोधाच्च निःश्रेयसमिति। तदपि सविशेषनिर्विशेष-ब्रह्मवादभेदेन द्विधास्ति। तत्र सविशेषवादो विष्णुशिवशक्तिसूर्यगणपतिपरकत्वेन पञ्चधा। अत्रापि कतिपयावान्तर भेदा वर्तन्ते। तेषु प्रथमो विष्णुपरकसवि-शेषवादोऽपि द्वैत द्वैताद्वैत शुद्धाद्वैत विशिष्टाद्वैतभेदेन चतुर्विधस्रोतस्तया महा-सागरशायिसगुण ब्रह्मावगमयति जीवजगत्। तत्रापि सर्ववेदान्तानां समन्वयसंभ-वात्। निर्विशेषब्रह्मवादस्त्वेकधैवाद्वैतवादनाम्ना सुप्रसिद्धः। तत्रोक्तसंशयोच्छेदा-यं देश्य क्रमेण आनन्दतीर्थानुयायिनामेष आशयः प्रदर्श्यते।

**श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्त्वतो भेदो जीव गणा हरेरनुचरा नीचोच्चभावं गताः। मुक्तिर्नैजसुखानुभूतिरमला**

**भक्तिश्च तत्साधनम् ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥ इति ।**

स्वतंत्रास्वतंत्रभेदेन द्विविधं सच्चिदानन्दात्मकं चेतनतत्वम् । तत्र सर्वज्ञानन्ताचिन्त्यशक्तिसंपन्नत्वाद्यपरिमिताशेषकल्याणगुणगणाश्रयः स्वतन्त्रो भगवान्विष्णुपरमतत्वम् । तदुक्तम् —

**स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्त्वमिष्यते । स्वतंत्रो भगवान्विष्णुर्निर्दोषोऽशेषसद्गुणः ॥ इति ।**

जीवश्च परस्परं भेदमाश्रितः, सृष्टिदशायामपि 'आत्मावारे श्रोतव्यो मन्तव्य इत्यादिश्रुतौ जीवेश्वरयोः कर्तृकर्मत्वबोधनात्तयोरनादिभेदसिद्धिः अधिकं तु भेद निर्देशादितिसूत्रेऽपि भेद एव राद्धान्तितः । एवं जगतोऽपि भेद एव एकोहं बहु स्यामिति' श्रुतौ इदं सर्वमसृजत इत्यनेन सृज्यसृष्टिभावश्रवणात् यावत्सृष्टिसत्यः । न च 'तत्त्वमसि' 'अयमात्माब्रह्मे'त्यादिश्रुत्या जगतो ब्रह्मत्वावगमात्कथं त्वदुक्तभेदसिद्धिरिति वाच्यम्, तद्गुणसारत्वात्तद्व्यपदेशः' 'तज्जलानिति' श्रुतिसूत्राभ्यां भवदुक्ताभेदस्यौपचारिकत्वनिश्चयात् । भोगादिव्यवस्थया, कार्याणां परस्परवैलक्षण्यप्रमया च भेदस्यैव निश्चयाच्च, अन्यथा श्रोतव्यादिश्रुतिसिद्धसाधनाद्यसिद्धया मुक्त्युच्छेदप्रसंगाज्जगद्बाधप्रसंगाच्च सृष्टिदशायामौपचारिक एवाभेदसिद्धिर्न तु तत्त्वत इति मन्तव्यम् । अथ सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुतिभिः सजातीयस्वगतनानात्वशून्यमेकमेव ब्रह्मेति त्वदुक्तभेदस्यैवौपचारिकत्वावगमः समुचित इति चेन्नैवम्, भेदप्रमापकबहुविधप्रमाणविरोधात् । तथा हि—प्रत्यक्षतस्तावदिदमस्माद्भिन्नमिति नीलपीतादेर्घटपटादेश्च भेदोऽध्यक्ष्यते । एतेन प्रत्यक्षं स्वरूपतो भेदं विषयीकरोति धर्मिप्रतियोगिघटितं वा, नाद्यः । धर्मिप्रतियोगिसापेक्ष भेदस्य स्वतो ग्रहणासंभवात् । यथा घटो न पट इत्यादौ घटप्रतियोगिकभेदविशिष्टः पट इति प्रतीयते, सा च प्रतीतिः स्वरूपभेदपक्षे न घटते, अभावज्ञानं प्रति प्रतियोगिज्ञानस्य करणत्वेन धर्मिप्रतियोगिकज्ञानं विना भेदज्ञानासंभवात् । बुद्धेर्विरम्य व्यापाराभावेन च धर्मिप्रतियोगिज्ञानपुरःसरं भेदज्ञानमिति द्वितीयपक्षेऽप्यसंभवग्रस्त एव । न च युगपदेव धर्मिप्रयोगिसहितभेदज्ञान-

मितिनोक्तदोष इति वाच्यम् , धर्मिप्रतीतेर्भेदप्रत्ययकारणत्वेन कार्यकारणयुद्धयार्यौग पद्यासंभवात्। तस्मान्न भेदप्रत्ययसंभव इति निरस्तम्। स्वरूपभेदवादिनं प्रति भवदुक्तदुषणानां चौरापराधान्माण्डव्यनिग्रहन्यायतुल्यतयासंभवात्। ननु प्रत्यक्षादेर्नियतविषयत्वेन भूतभाविवर्तमानसकलभेदग्राहकत्वेऽसामर्थ्यान्न सकलभेदसिद्धिः सर्वाद्वैतबोधकश्रुतिस्तु प्रत्यक्षविषयादन्यत्रापि प्रवर्तमाना न तेन बाधितुं शक्यते, विमतं न सर्वभेदग्राहि, प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदिति श्रुतिमूलानुमानेनापि च प्रत्यक्षादेरद्वैतश्रुतेरबाधकत्वेनाद्वैत एव परमार्थ इति चेन्मैवम् , प्रत्यक्षविरोधात् , आदित्यो यूप इत्यादिवाक्यानमादित्यसदृशफलदातृत्वेनादित्यसादृश्ये लक्षणया यथा स्वार्थबोधकत्वं यथा वा 'मा हिंस्यात्सर्वा भूतानि' इत्यस्य 'अग्नीषोमीयं पशुमालभेत' इत्यनेन विरोधपरिहाराय संकोचः तथा प्रकृतेऽपि एकमेवेति श्रुतीनां प्रत्यक्षविरोधात्किञ्चिदर्थपरत्वं संकोचोवेति भेदप्रत्यक्षबाधाभावात्। अद्वैतश्रुतिः प्रतीयमानार्थे न प्रमाणमन्यतरपरत्वे सति प्रमाणन्तरविरुद्धार्थत्वादादित्यो यूप इति वाक्यवत्। ऐकात्म्यवाक्यं किञ्चिदर्थपरं वेदवाक्यत्वादग्निहोत्रवाक्यवदित्यनुमानाभ्यां पूर्वोक्त (भवदुक्त सर्वभेदाभावग्राहकानुमानस्य प्रतिबध्यत्वाच्च। एवञ्च प्रतियोगिसापेक्षत्वं भेदस्येति नियमो वस्तुस्वरूपभेदवादिनं प्रति न घटत इत्यपि दोषः प्रथमं सर्वतो विलक्षणतया वस्तुस्वरूपे गृह्यमाणे पश्चात्प्रतियोग्यपेक्षया विशिष्ट व्यवहारसंभवेन गगनकुसुमायितः।

यत्तु मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति श्रुतिर्नानादर्शनवतां महद्भयं दर्शयतीति तद्राजस्यायाऽगत्याद्वैतमेवांगीकर्तव्यमिति तन्न, नानैवदर्शनवतां भेदाऽभेदवादिनां महद्भयं भवति नतु नानैवदर्शनवतां द्वैतिनामस्मदादीनामित्याशय परत्वेनास्याः श्रतेरद्वैतपरत्वाभावात् तदुक्तमनुव्याख्याने 'इति श्रुताविवेत्यस्माद्भेदाभेद निराकृतिः।' बृहद्भाष्येऽपि नानेवेति भेदाभेदनिराकरणार्थमिति केवलभेदनिराकरण प्रत्याशायाः पूतिकुष्माण्डीकृतत्वात्। एवमेकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतिरपि नाद्वैत प्रतिपत्तिपरा किन्तु अद्वितीयोऽयं राजा नान्यः कश्चिदेतादृशः विपश्चिदपश्चिम इत्यादिवाक्यवत्सर्वोत्कृष्टापरिमितानन्तशक्तिमत्त्वं परमात्मनः प्रतिपादयति, एतादृशो नान्य इति तात्पर्यपरत्वेन नाद्वैतप्रतिपादनपरत्वं श्रुतीनां कुत्रापीतिराद्धान्तः। अथ यथा नद्यः स्पन्द्यमानाः समुद्रायणाः समुद्रमभिसम्विशन्ति एवमेतानि

नामानि पुरुषमभिसंविशन्ति, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् , महामायेत्यविद्येति प्रकृतिमोहिनीति च। प्रकृतिर्वासनेत्येवं तवेच्छानन्त : कथ्यते। सोऽभिध्या सजूतिः स प्रज्ञा स आनन्दः। एषस्त्वेष पुरुषः एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिनादिरनन्तोऽन्तः परमः पराद्विश्वरूप इत्यादिश्रुतिभ्यः परस्यैश्वर्ययोगेन विरुद्धार्थतयेष्यते इति ब्रह्माण्डवचनाच्च सर्वविधाशब्दवाच्यानन्तशक्तिमत्परमात्मनो बहुधाकरणावगमात्सृष्टिप्रलयादीनां ब्रह्ममयत्वेनान्याभावाद्‌द्वैतावगमो भ्रान्तिकल्पित एवेति चेन्न। प्रकर्षेण करोति इति विग्रहयोगात्प्रकृतावनुप्रविश्यतां परिणाम्य तत्परिणामनियामकत्वेन तत्र स्थित्वाऽचिन्त्यनामरूपात्मकजगद्रचनया ब्रह्मात्मकत्वं जगतो व्यपदिश्यते न चैतावता तस्य मिथ्यात्वं ब्रह्मातिरिक्तत्वेन स्वरूपसत्ता वा, किन्तर्हि ईशसृष्टमायोपादानकत्वेन तत्तद्भेदभिन्नभ्रमभिन्नत्वमेव। अथ हैष परमात्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार इति श्रुतिः। अविकारोपि परमः प्रकृतिन्तुविकारिणीम् अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते। इति नारदवाक्यात्। तथा च सिद्धान्तसूत्रम् —

विष्णोर्देहाज्जगत्सर्वमाविरासीत्। इति॥

## ( माध्वमतसृष्टिक्रमदिग्दर्शनम् )

तत्र परमात्मनो जगदुपादानत्वं नाङ्गीक्रियते, किंतु निमित्तकारणत्वमेव तदुपादानकत्वे चोक्तवक्ष्यमाणभेदसिद्धिर्न स्यादुपादानोपादेययोः श्रुत्या तादात्म्याभिधानात्। अतो मायोपादानकत्वमेवेति निश्चितम्। उक्तश्चैकादशस्कंधतात्पर्ये-त्रिगुणा प्रकृतिर्माया पश्येत्तन्मात्रकं जगत्। निर्मिमीते जगत्सर्वमतो मायेति कथ्यते' इति। परास्य शक्तिर्विविधैवश्रूयते श्रुतेः।

**ससर्ज भगवानादौ त्रीन्गुणान्प्रकृतेः परः।**

इति मणिमंजर्योक्तिश्च। प्रकृतिसद्भावे तस्या जगदुपादानत्वेच

**भगवत्तंत्रता यस्यास्तद्भार्यात्वं सुरूपता।**
**उच्यते माया सा तु श्रीर्दोषपूताजडा स्मृता॥**

परिणामिनी च यस्यास्तु दोषाचेतनता तथेति (भा. उ. स्क. तात्पर्यवचनम्) द्वितीया प्रकृतिः प्रोक्तास्तद्रूपा हि गुणास्त्रयः इति (द्वि. स्क तात्पर्यवचनमपि) सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवा इति भगवद्गानमपि मानम्। आविर्भावक्रमश्चोक्तो मध्वसिद्धान्तसंग्रहे यथा–भगवान्महदादितत्त्वांशानस्त्रोदरे निःक्षिप्य ब्रह्माण्डान्तः प्रविवेश। तत उदके शयानस्य भगवतो नाभेः पद्मम-भूत्, पद्मे चतुर्मुखोऽजनि, ततो देवादयो मन आदीनि जातानि। तथा च श्रुतिः एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीति। ततोऽविद्योत्पन्ना, तस्याश्च मोहो महामोहस्तामिस्रमन्धतामिस्रं तमश्चेति पञ्च पर्वाणि। पुनर्जीवाच्छादिका परमाच्छादिका शैवलामाया चेति चतु-र्विधा। सर्वाप्यविद्या जीवाश्रिता प्रातिस्विकी चेति'क्रमशः सूक्ष्मस्थूलादिजगदुत्पत्ति-र्ज्ञेया विस्तरभिया नेहोच्यते। एवञ्च मायाद्वारकभगवदाविर्भूतस्वरूपत्वेन जगतो न मिथ्यात्वं किं तु सत्यत्वमेव। न च रज्जुसर्पन्यायेनाद्वैतज्ञानानन्तरं जनदपि मिथ्यैव प्रतिभातीति वाच्यम्। सत्यकामः सत्यसंकल्प इत्यादिश्रुत्या प्रतीयमानसत्यसंकल्प परमात्मनः सृष्टेः मिथ्यात्वासंभवात्। नचैकविज्ञानेन सर्वं विज्ञानप्रतिज्ञाऽन्यथानु-पपन्ना सती सर्वं कार्यजातं मिथ्येत्यवगमयतीति वाच्यम्, प्रधानकारणत्वयोर्वि-ज्ञाते सर्वविज्ञानोपपत्तिसंभवे सर्वमिथ्यात्वप्रतिपादनासंभवात्। उपपद्यते च प्रधान पुरुषज्ञानाज्ञानाभ्यामप्रधानग्रामादिज्ञाना ज्ञानव्यवहारः। कारणे पितरि च ज्ञाते तस्य पुत्रोऽयमिति विज्ञानम्। एवं जगत्कारणे ब्रह्मणिज्ञाते कार्यभूतजगज्ज्ञानम्। अन्यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातमित्यत्रैकमृदाज्ञातयैव वाक्यपूर्तिसंभवे एकपिण्डशब्दौ वृथा प्रसज्येयाताम्। ननु प्रपञ्चो यदि वर्तेत निवर्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थतः इतिवचनाद्द्वैतस्य कल्पितत्वसिद्ध्या तस्य मिथ्या-त्वमेवेति चेन्न, भावानवबोधात्, तथा हि यद्ययमुत्पद्येत निवर्तेत न संशयः। तस्मादनादिरेवायं पञ्चविधभेदप्रपञ्चः। भेदपञ्चकश्च–जीवेश्वरभेदः, जीवजडभेदः, ईश्वरजडभेदः, जीवानां परस्परभेदः, जडानां परस्परभेदश्चेति। तथा च श्रुतिः जीवेश्वरभिदा चैव जडेश्वरभिदा तथा। जीवभेदो मिथश्चैव जडजीवभिदा तथा। मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः। सोऽयं सत्योऽनादिश्च सादि-श्चेन्नाशमाप्नुयात्॥ न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः' इत्यत्र

सत्यशब्दो नित्यत्वबोधकः। जीवेशयोर्भिदा चैव जीवभेदः परस्परम् जडेश-योर्जडानां च जडजीवभिदा तथा॥ पञ्च भेदा इमे नित्याः सर्वावस्थासु नित्यश इति निर्णयवाक्यादेवावगन्तव्यम्। इत्थञ्च इमे भेदा नित्याः सत्या न तु मिथ्याभूताः। यद्वा नित्याः स्वाभाविका नत्वौपाधिका इतिव्याख्यानसंभवात्। सत्यनित्यशब्दयोरेकार्थत्वस्याचार्यैरेवोक्तत्वात्। न च ब्रह्मविद् ब्रह्मैव भवतीति श्रुत्या विदुषो जीवस्य ब्रह्मात्मतावगमादात्मशब्दश्चात्राभेदाभिधायीति कथं जीवेश्वरभेदस्त्रिकालाबाध इति वाच्यम्, संपूज्य देवतां भक्त्या मर्त्यो भवति देववदितिवत्सानिध्यार्थपरत्वात्। पुरोहितोऽयं राजा संवृत्त इतिवद्वा सादृश्यार्थपरत्वेनाद्वैतपरत्वाभावात् तदुक्तम्-यथा पक्षी च सूत्रञ्च नानावृक्षरसा यथा। यथा नद्यस्समुद्राश्च शुद्धोदलवणे यथा॥ यथा चौर्यापहार्य्यौ च यथा पुंविषयावपि। तथा देवेश्वरौ भिन्नौ सर्वदैवविलक्षणौ इति। सत्यमेतदनुविश्वे मदन्तिराति देवक्यगृणानोमघोनः सत्यासोऽस्य महिमा गृणेशवो पक्षेषु विप्रराज्ये सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा मयि वारुण्यो मयि वारुण्यो मयि वारुण्य इति मोक्षानन्दश्रुतिः निर्विचकित्सं जीवेश्वरभेदमवगमयति। द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव चेत्यादि स्मृतिरपि जीवेशभेदसाधिका। एवमनुमानेनापि जीवेशभेदसिद्धिः यथा-परमेश्वरोजीवाद्भिन्नः तदाराध्यत्वात्, यो यदाराध्यः स तस्माद्भिन्नो यथा स्वामिनो भृत्यः। समाराधनेनैव प्रीतो भगवानभीष्टं प्रयच्छति, लोकेऽपि स्तवादिना प्रसन्नो राजा याचकायाभीष्टं प्रयच्छति। तदुक्तम्-घातयन्ति हि राजानो राजाहमिति वादिनः ददत्यखिलमिष्टं च स्वगुणोत्कर्षवादिनामिति। ते च जीवा अणुपरिमाणका असंख्याकाः। तदुक्तं तत्त्वनिर्णये-अनागता अतीताश्च यावन्तः सहिताः क्षणाः। अतीतानागताश्चैव यावन्त परमाणवः॥ ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक्। परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः। इति।

एवं गणशोऽनप्यनन्ता जीवा न केवलं मिलित्वैवेति तदप्युक्तं निर्णये-ब्रह्मयोग्या ऋजवो नाम देवाः पृथग्गणाः। तैरेवाप्यं तत्पदं तु नैवान्यैः साधनैरपि। एवं सर्वपदानान्ते योग्याः सर्वपृथग्गणाः आसुराः कलिपर्यन्ता एवं दुःखोत्तरोत्तराः। कलिर्दुःखाधिकस्तेषु तेऽप्येवं ब्रह्मवद्गणाः। तथाप्यासुराः सर्वेगणा योग्य-

तया सदेति । ते च त्रिविधा मुक्तियोग्याः नित्यसंसारिणस्तमोयोग्याश्चेति । तत्र मुक्तियोग्याः पंचविधा देवर्षिपितृ चक्रवर्तिमनुष्योत्तमभेदात् । ब्रह्मवाय्वादयो देवा, ऋषयो नारदादयः पितरश्चिराः, रघ्वंबरीषादयश्चक्रवर्तिनः, मनुष्योत्तमास्तु द्विविधाः चतुर्गुणोपासकाः एकगुणोपासकाश्चेति । तृणजीवा एकगुणोपासकाः तदतिरिक्ताश्चतुर्गुणोपासकाः । सर्वे चैते जीवाः परमात्मनःप्रतिबिम्बभूता नित्या एव, तदुक्तं सिद्धान्तसारे—प्रतिबिम्बस्तु बिम्बार्कवन्नाभूतस्तत्सदृशः इति स च द्विविधः नित्योऽनित्यश्चेति । परमात्मव्यतिरिक्ता सर्वेऽपि चेतनाः परमात्मप्रतिबिम्बा नित्याः । तेषां नित्यान्तःकरणाद्युपाध्युपादानकत्वेन जीवभूता नित्याः । अनित्यदर्पणाद्युपाध्युपादानकाश्च प्रतिबिम्बा अनित्या इति । एवं प्रत्यक्षानुमानश्रुतिस्मृत्यादिभिरवगतत्रिकालाबाधितसत्यभेदभिन्नाः परमेश्वरात्तदधीनाश्च जीवाः स्वगततारतम्यमाश्रिताः परमकैवल्येऽपीति परोक्तभेदतृष्णा मृगतृष्णायत एव । उक्तं च **निर्णये** मुक्तानाञ्च न हीयन्ते तारतम्यञ्च सर्वदेति । निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यते इति च । मनुष्यादिविरिञ्चान्तंसुखं मुक्तौ शतोत्तरमिति बृहद्भाष्यम् । कामः संकल्प आनन्दो मुक्तानां तारतम्यत इति तैत्तिरीयभाष्यञ्चात्र प्रमाणमवसेयम् ।

## भक्ति स्वरूप निर्णयः ।

एवंभूतजीवानां स्वरूपघटकानन्द प्रतिद्वन्द्विसमर्पकरहितावरणशून्यापरिमितानन्तशक्तिसम्पन्नाऽशेष कल्याणगुणात्मकब्रह्मसाक्षात्कारात्मकमोक्षसाधनममलाभक्तिरूपा सेवैव । तत्रामलत्वं फलाभिसंधिरूपमलरहितत्वमेव । **तदुक्तं छांदोग्य भाष्ये** विष्णौ भक्तिर्विशेषेण मोक्षावाप्तौ हि कारणम् । तद्भक्तेषु क्रमेणैव रमाद्यासुत्वनन्तरम् ॥ तृतीयमपि वैराग्यं न चान्यन्मोक्षकारणमिति । **भक्तिस्वरूपं** चोक्तं निर्णये माहात्म्यज्ञान पूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति ख्यातस्तया मुक्तिर्न चान्यथेति । बृहद्भाष्येऽपि—'सर्वस्मादुत्तम इति सम्यक्स्नेहयुता मतिः । सुस्थिराभक्तिरुद्दिष्टा तया मुक्तिर्न चान्यथेति । **गीतातात्पर्येऽपि**—ब्रह्मरुद्ररमादिभ्योऽप्युत्तमत्वं स्वतंत्रताम् । सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णताम् ॥ निर्दोषत्वञ्च विज्ञाय विष्णोस्तत्राखिलाधिकः । स्नेहो भक्तिरिति प्रोक्तः सर्वोपायोत्तमोत्तमः इति । **सा च भक्तिरूपा सेवा** अंकन, नामकरण, भजन-

भेदात्त्रिधा । भगवत्स्वरूप स्मरणार्थमभीष्टसिध्यर्थंचांकनं विहितम्, साकल्यसंहितापरिशिष्टे यथा-'चक्रं बिभर्ति पुरुषोऽमिततप्तबलं देवानाममृतस्य विष्णोः । स याति नाकं दुरितान्विधूय विशंति यद्यतयो वीतरागाः ॥ देवाश्च येन विधृतेन बहुना सुदर्शनेन प्रयातास्तमायन्येनांकिता मनवो लोके सृष्टिं वितन्वन्ति ब्राह्मणास्तद्वदन्ति तद्विष्णोः परमं पदं येन गच्छन्ति लाञ्छिताः । उरुक्रमस्य चिह्नैरंकिता लोके सुभगा भवाम' इति । नामकरणं पुत्राद्याप्तसंबन्धिनां केशवादिनाम्ना व्यवहारः सततं भगवन्नामानुस्मरणार्थम् । वाचा-सत्यं, हितं प्रियं स्वाध्यायः । कायेन-दानं, परित्राणं, परिरक्षणम् । मनसा-दया, स्पृहा, श्रद्धा चेति दशविधमेकैकं निष्पाद्य नारायणसमर्पणं भजनम् । **तदुक्तं**-अंकनं नामकरणं भजनं दशधा च तत् इति ।

## वेद्यतत्त्वविचारः

निखिलनिगमागमप्रतिपाद्यो भगवान् पुरुषोत्तम एव वेद्यत्वेनोक्त । यद्यप्यापाततो वेदप्रतिपाद्योऽविचाररमणीयः कियान्पदार्थः प्रतिभाति तथापि पर्यालोचनया साक्षात्परंपरया वा प्राधान्येन वेदानां तात्पर्यं भगवत्तत्वप्रदिपादन एवेति बोध्यम् । 'वेदैश्च सर्वैरहमेव वेद्य' इति गानाद्विष्णोः सर्वोत्कर्षे महातात्पर्यावगमात् । उक्तं च तत्रैव-यस्मात्क्षरमतीतोहमक्षरादपिचोत्तम । अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः। एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत' इति। **महावराहे**ऽपि-मुख्यञ्च सर्ववेदानां तात्पर्यं श्रीपतौ परे । उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरमिति। एवं जीवेश्वरभेदेन द्विविधं चेतनतत्त्वमवगतं भवति।

## जीवेश्वर भेद विचारः

**ननु** कथमिदं स्याद्यावता **तत्त्वमस्यादि** महावाक्यजातं जीवपरमात्मनोरभेदं बोधयेदिति चेन्न, श्रुत्यर्थतात्पर्याविजृंभणात् । तथा हि-अचिन्त्यानन्तशक्तिगुणादिपरिपूर्ण ईश्वरः, अज्ञत्वादिदोषयुक्ताश्च संसारिणो जीवा इत्यनादिसिद्धो जीवेश्वरभेदः **तदुक्तम्**—'जीवेश्वरभिदा चैवे'त्यादिना । नन्वस्तु जीवानामपि तादृशशक्तिमत्त्वं स्मर्यते च तत्र तत्र हनुमदर्जुनादीनामनन्तशक्तिमत्त्वमिति चेन्न, हनुमदादीनामपि तादृशाचिन्त्यशक्तेरस्मर्यमाणत्वात् । कीदृशी सेति चेच्छृणु—ईश्वराचिन्त्यशक्त्यैव पाण्डवानीतबहुयोजनसुवर्णरत्नपर्वतानां मूर्तानामपीन्द्रप्रस्थेऽ-

वस्थानम्। प्राग्ज्योतिषनगरात्समाहृतबहुद्रव्याणां द्वारकायामल्पप्रदेशे स्थापनम् निर्णयवाक्यादवगम्यते 'यथा सुवर्ण रत्नगिरयश्चतुर्भिरेतैः संमार्जिताः। चत्वारो योजनानां हि दश त्रिंशच्छतं तथा॥ चतुःशतश्च क्रमशः उच्छ्रयाद्गिरयोऽर्जिताः। प्रतीच्यापसव्येन क्रमादेभ्यः समार्जिताः। विश्वकर्मकृतत्वात्तु परस्याल्पेऽपि च स्थले॥ अन्तर्गतास्ते गिरयस्तदद्भुतमिवाभवत् इति। तथा — चतुर्दन्तान्षट्सहस्रान्करीन्द्रान्प्राहिणोद्द्वारवत्यै। नराधिपा-देवगंधर्वनागान् जित्वानीतं हेमरत्नोचराशिम् शतद्वयं योजनानां समृद्धं समन्तः। प्राहिणोत्स्वां पुरीं स, इति। विष्णुतत्वनिर्णयेपि—'परमाणु प्रदेशेऽपि ह्यनन्ताः प्राणिराशयः। सूक्ष्मत्वादीशशक्त्यैव स्थूला अपि च संस्थिताः। सहस्रयोजनसभां प्रभावाद्विश्वकर्मणः। अनंतराशयोऽनन्ताः प्रजानामधिसंस्थिताः' इति। नैतादृशशक्तिमत्त्वं जीवराशाविति जीवेशभेद एवानादिसिद्धः। न चोक्त श्रुतिविरोधादन्यथैवैतद्व्याख्येयमिति वाच्यम्। नित्य-परोक्षापरोक्षभेदेन **तत्त्वं**पदयोरैक्यायोगेन आदित्यो यूप इतिवदुक्तश्रुतीनां सादृश्यपरत्वात्। अन्यथा 'जीवस्य परमैक्यञ्च बुद्धिसारूप्यमेव वा। एकस्थान-निवेशो वा व्यक्तिस्थानमपेक्ष्य वा॥ न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः। स्वातंत्र्यपूर्णतेऽल्पत्वपारतंत्र्ये विरूपता इत्यादि श्रुतिविरोधो दुष्परिहरः स्यात्। **वस्तुतस्तु** 'ऐतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसि श्वेतकेतो' इत्यादिश्रुतीनां स्वातंत्र्यादिगुणवत्तया स आत्मा = परमात्मा त्वं तु तद्रहितत्त्वादतत्त्वमसि = परमात्मभिन्नोसीत्यर्थपरत्वेनैक्याबोधनेन द्वैत एव सर्वश्रुतितात्पर्यमित्यवगतं भवति।

## कैवल्य विचारः।

अथैतादृशाचिन्त्यशक्तिगुणादिमत्परमात्मनः प्रसादाज्जीवो भवसागरमुत्तीर्य्य मुक्तिभाग्भवति। स च प्रसादः जिज्ञासोत्थज्ञानज एवेति सपरिकरं जिज्ञासा-धिकरणे द्रष्टव्यम्। एवञ्च चराचरजगतां सृष्ट्यादयो वन्धान्ताः। वन्धमोक्षोपि तदधीन एव, तथा हि अपरोक्षज्ञानानन्तरं परमात्मभक्तिर्जायते, ततोऽत्यर्थप्रसादः ततश्च मुच्यते। तत्र मोक्षसाधनापरोक्षज्ञानसाधनानि तु—विविधसांसारिक दुःख-दर्शनेन सज्जनसंगत्या चेहामुत्रफलभोगविरागः शमदमादिसंपत्तिः अध्ययनसमाप्तिः, शरणागतिः गुरुकुलवासः, तदुपदेशेन सच्छास्त्रार्थज्ञानरूपं श्रवणं, श्रुतदृढीकरणाय मीमांसापरपर्यायो मननं. गुरुभक्तिः, यथायोग्या परमाभक्तिः, साधमेषु सत्सु दया,

स्वसमेषु स्वात्मवत्स्नेहः, उत्तमेषु भक्तिः, निवृत्तकर्मानुष्ठानं, नीषिद्धसंत्यागः, सर्वसमर्पणं, तारतम्यपरिज्ञानं, पञ्चभेदज्ञानं, प्रकृतिपुरुषविवेकज्ञान, मयोग्यनिन्दा, उपासना चेति सर्वजीवसाधारणानि। विस्तरतः सिद्धान्तप्रतिपादकग्रंथे द्रष्टव्यानि। एभिः साधनैः सात्विक, राजस, तामसप्रकृतिकानां किम्बहुना-तमोबहुलासुरादीनामपिक्रमान्मुक्तिः। उक्तञ्च मध्वसिद्धान्तसंग्रहे तमो योग्यानामपि द्वेषपरिपाकानन्तरं देहादुत्क्रमणंभवतीति। तत्र मानुषादीनां गरुड, शेषेति मार्गद्वयक्रमेण यथानुशयं लयानन्तरं सालोक्य, सामीप्य, सारूप्य, सायुज्येति चतुर्विधभोगवत्त्वेन मुक्तिः। देवादीनां तु नोत्क्रमणं नवार्चिरादिमार्गोपीति भाष्यादौ सपरिकरं द्रष्टव्यम्।

## प्रमाणनिर्णयगर्भमुपसंहारः।

आजगतः प्रमेयसिद्धिः प्रमाणानि तु प्रत्यक्षानुमानशब्दात्मकानि त्रीण्येव। अन्यान्यदर्शनसमये न्यूनाधिकानि स्वीकृतान्यप्येषु त्रिषु यथायथं गतार्थतयाऽधिकप्रमाणस्वीकारे प्रयोजनाभावान्न्यूनेऽपि निर्वाहासंभवेनत्रीण्येव प्रमाणानि सम्यगित्यवगन्तव्यम् विशेषजिज्ञासुभिस्तत्तद्ग्रंथेभ्यः। प्रतिपादितं चैतद्रहस्यं स्वात्मानं प्रभंजनावतारं मन्यमानेनानन्दतीर्थेनोपपादितञ्च स्वग्रंथावसाने तत्र तत्रावतारतत्त्वम् प्रथमस्तु हनुमान्स्यातिद्वीयो भीम एव च। पूर्णप्रज्ञस्तृतीयश्च भगवत्कार्यसाधकः। इत्यभिंप्रायकं निर्दिष्टे श्रुत्यात्मकं पद्यम्-"यस्य त्रीण्युदितानि वेदवचने दिव्यानि रूपाण्यलं वपट् तद्दर्शनमित्थमेतदखिलं वेदस्य गर्भे महत्" इति। तथा-वायो रामवचो न यं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यस्तु तृतीयमेतदधुना ग्रन्थः कृतः केशवे इति। विष्णुतत्त्वप्रतिपादनमेव सर्वशास्त्रचरमतात्पर्यमिति दिङ्मात्रमुपादर्शि सविस्तरमाकरग्रन्थे द्रष्टव्यं तत्त्वजिज्ञासुभिरित्युपरम्यते।

॥ इति श्रीसर्ववेदान्तसारसंग्रहे पूर्णप्रज्ञदर्शनं नाम द्वितीय स्तवकः समाप्तः ॥ २ ॥

॥ ३ ॥

## ॥ अथ द्वैताद्वैतदर्शनसारसंग्रहः ॥

यथायुगं तत्तदनेकरूपं सीतादिशक्त्या सहितं परेशम्। सुरासुराद्यैरपि वन्द्यमानं भक्त्या समीडे निजलक्ष्यसिद्ध्यै ॥१॥ अथ यथा-श्रीमन्निम्बार्क समयमु-

भयविधश्रुतिस्मृत्यादिप्रमाणसद्भावेनोभयविधवाक्यानाञ्च तुल्यबलतया परस्परबाध्य-बाधकभावासंभवे समेषां वाक्यानां 'स्वार्थे प्रामाण्यसिद्धये चिदचिद्भ्यां स्वाभाविकभिन्नाभिन्नं ब्रह्मेति राद्धान्तितम् ।

## भेदाभेदविरोध परिहारः ।

ननु तादात्म्यसंबंधावच्छिन्नप्रतियोगिताकाभावो भेदस्तदभावश्चाभेदः । एवं चिदचिदात्मकजगति तादात्म्यसम्बन्धावच्छिन्न ब्रह्मप्रतियोगिताकाभावस्य, ब्रह्मणि वा तत्सम्बन्धावच्छिन्नचिदचित्प्रपञ्चप्रतियोगिकाभावरूपस्य भेदस्य सत्त्वे तदभावरूपस्या भेदस्य गोत्वाश्वत्वयोरिव विरुद्धतया सामानाधिकरण्यासंभवात्कथञ्चिदचिदीश्वराणां स्वाभाविकभेदाभेदवत्त्वमिति चेन्नैवम् न वयं लोकसिद्धतादृशभेदाभेदावंगीकुर्मो येन विरोधः स्यात्, किन्तर्हि श्रुतिस्मृत्यादिप्रमाणसिद्धावेव, न च तयोर्विरोधः, तत्र भेदवाक्यानां चिदचित्प्रपञ्चस्वरूपबोधनपरत्वादभेदवाक्यानाञ्च तादृश प्रपञ्चे ब्रह्म-सत्तातिरिक्तस्वतंत्रसत्ताभावरूपपरतंत्रसत्वबोधनेन सर्वसामञ्जस्यात् । अन्यथा परस्प-रविरोधेनैकतरपक्षन्यूनतायाः सर्वाप्रामाण्यस्यवाऽपरिहार्यतापत्तेः ।

## ईश्वरतत्त्वनिरूपणम् ।

तत्र स्वतंत्रास्वतंत्रभेदेन द्विविधचेतनसत्तयोरात्माश्रितत्वे सति स्वाय-त्तस्थितिप्रवृत्त्यादिमन्नियन्त्रित्वादिसमानाधिकरणासाधारणधर्मवत्त्वब्रह्मादिपदवाच्य-श्रीकृष्णान्वयिनी प्रथमा, नियन्त्रित्वस्वतन्त्रसत्तयोः सामानाधिकरण्यनियमात्, श्रीकृष्णस्यैव च सर्वनियन्तृत्वात् । 'आत्मा हि परमः स्वतन्त्रोऽधिगुण.' 'सत्वं स्वातन्त्र्यमुद्दिष्टंतच्च कृष्णे न चापरे' इत्यादिश्रुतिस्मृतिभ्यामविमेयपरिपू-र्णसर्वज्ञानबलैश्वर्यवीर्यकारुण्यवात्सल्यदयातितिक्षाद्यनन्तकल्याणगुणगणाढ्यनन्ताचि-न्त्यस्वाभाविकशक्तिमज्जगज्जन्माद्यभिन्ननिमित्तोपादानकारणचेतनाचेतनवस्तुस्वाभा-विकभेदाभेदसम्बन्धाश्रयसर्वश्रुतिशिरोरत्नवेद्यरमानिवासपरमात्मपुरुषोत्तमादिशब्दा-भिधेयसच्चिदानन्दविग्रह इच्छाधीनरामकृष्णादिस्वरूप ईश्वरपदार्थः । सर्वे चैते ज्ञानैश्वर्यबलादयो धर्माः 'परास्य शक्तिर्विविधैव श्रूयते । स्वाभाविकी ज्ञानबल-क्रिया चे'तिश्रुतेरग्न्यादावौष्ण्यादिवत्स्वाभाविका नित्यसिद्धा न त्वागन्तुका अविद्या-विलासतो वा । एवं श्रीसीताराधिकापि च भगवतो नित्यानपायिनी शक्तिविशेषा, 'स इममेवात्मानं द्वेधाऽपातयत् पतिश्च पत्नी चाभवताम्'

इतिश्रुत्या तत्स्वरूपैव विज्ञापिता, धामभूषाविग्रहादीनामपि भगवत्स्वरूपत्वं तत्तदाकरग्रंथेभ्योऽवगन्तव्यम्, किं बहुना निरुक्तमेदाभेदयोरेकत्र सामानाधिकरण्यस्य श्रुतिस्मृत्यादितात्पर्यविषयत्वेन चिदचित्पदार्थोपलक्षितमखिलमेव जगत्स्व स्वरूपेण नानाभेदभिन्नमपि तद्धर्मतया तदभिन्नमेव। 'एकोहं बहु स्याम्प्रजायेय' इति श्रुतेः। सर्वं चैतदग्रे स्फुटी भविष्यति। **परतंत्रसत्ता** च चिदचिन्निष्ठा, 'यदासीचदधीनमासीत्' जीवोऽल्प शक्तिरस्वतंत्रोऽवरः' अस्वातन्त्र्यात्तदन्येषाम सत्वं विद्धि भारत' इति स्मृतेश्च।

## जीवतत्त्वनिरूपणम्

**तत्र चिन्निष्ठा परतन्त्रसत्ता** चेतनत्वे सति ज्ञानाश्रयत्वे च सति भगवच्छ्रीवासुदेवायत्त स्वरूपस्थितिप्रवृत्तिकतारूपा। सा च चिदात्मकनियम्य वर्गप्रवृत्तिः तदसाधारणधर्मत्वात्। 'तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' 'एष साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधुकर्म कारयति तं यमेभ्यो लोकेभ्योऽधो नीनिषते' इत्यादिश्रुत्या ईशभास्य चिद्वर्गेऽस्वातन्त्र्यमवगम्यते। स च अणुर्ह्येष आत्मा चेतसा वेदितव्यः, वालाग्रशतभागस्य शतधाकल्पितस्य च। जीवो भागः स विज्ञेयः स चानन्त्याय कल्पते', अन्तः प्रविष्टः शास्ता जनानामिति श्रुतिभ्य उत्क्रान्त्यादिश्रुत्या च प्रतिशरीरं भिन्नोऽनन्ताणुपरिमाणकश्चिद्वर्गस्तावद्द्विधा, बद्धमुक्तभेदात्। तत्रातीतानन्तकर्मवासनावशाल्लब्धदेवमनुष्यतिर्यगादिशरीरेषु दृढात्मत्वाभिमानिनो बद्धा अपि मुमुक्षुबुभुक्षुभेदेन द्विविधाः। विविधसांसारिकदुःखानुभवनान्तरीयकसञ्जातवैराग्यसंपत्त्या मोक्षाभिलाषुका मुमुक्षवोऽपि मुक्तिकामस्वरूपावाप्तिकामाभ्यां द्विधा एव। वैषयिक सुखकामा बुभुक्षवोपि भाविश्रेयस्का नित्या संसारिगश्चेति द्विप्रकारकाः। **एवं नित्यमुक्तस्वरूपा मुक्ताश्च** सर्वजीवा अनाद्यघटघटनापटीयसीशमायासमाच्छादितस्वरूपं प्रमाणसिद्धं प्रत्यगात्मानं भगवदनुग्रहाज्जानन्ति। 'तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मन' इति श्रुतेः बंधको भवपाशेन भवपाशाच्च मोचकः। कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः॥ दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्तिते इत्यादिस्मृतेश्च भगवत्तन्त्रसत्ताकत्वं चिद्वर्गस्य।

## जीवाणुत्वविचारः

**ननु** भवत्वीश्वराधीनस्थितिप्रवृत्तिको जीवगणो भवदुक्ताणुपरिमाणकत्वन्तु न संभवति तस्य, तथात्वे सर्वशरीरानुसन्धातृत्वप्रकाशकत्व सर्वावयवसुखाद्यनुभवितृत्वाद्यसंभवः स्यादेवेति चेन्न, 'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्री क्षेत्रं तथा कृत्स्नं प्रकाशयति भारतेति भगवद्वचनप्रामाण्यात् जीवात्मनोऽणुत्वेऽपि तदाश्रितज्ञानादिधर्माणां शरीरव्यापित्वेनादोषात्। **ननु** शुद्धचेतनप्रतिबिम्ब एव जीवस्तस्याविद्याकल्पितान्तःकरणोपाधिविगमेजीवेशयोरैक्ये कुतोऽणुत्वसिद्धिः। **न च** सावयवरूपवद्द्रव्यस्यैव प्रतिबिम्बो दृश्यते निरवयवारूपि ब्रह्मणः प्रतिबिम्बोऽसंभवग्रस्त इति वाच्यम्, निरवयवारूपिगगनप्रतिबिम्बवद्ब्रह्मप्रतिबिम्बसंभवादिति चेन्न, नीरूपरूपस्य प्रत्यक्षविषयस्याश्रयद्रव्यविशिष्टस्य चाक्षुषसावयवद्रव्य एव प्रतिबिम्बदर्शनेन त्वन्मते तदुभयरहितस्य तदसंभवात्। आकाशस्यापि पंचीकृतस्य सावयवत्वेन रूपवत्त्वेन च प्रतिबिम्बदर्शनात्केवलस्य तस्य तदसंभवाच्च। अन्यथा कालधर्मादीनामपि शब्दस्पर्शादौ प्रतिबिम्बभावापत्तेः। एतेन 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः' इति श्रुतिबलाद्बुद्धेः परिमाणलक्षणगुणेन श्रूयमाणाणुत्वं जीवात्मनो बुध्धुपाधिकृतमेव न वास्तवमिति निरस्ततरम्। यथा बुद्धेः परिणामगुणेन तथात्मगुणेनापि ह्यवरोऽणुपरिमाणकः प्रत्यगात्मा दृष्ट इति श्रुतितात्पर्यावधारणात्। एवकारश्च मध्यमांविभुपरिमाणाभ्यां जीवात्मनो व्यावर्तकः।

## चिदीश्वरयोः भेदाऽभेदनिर्णयः

**एवञ्च**.'य आत्मानमन्तरो यमयति' अन्तः प्रविष्टः शास्ताजनानाम्। आत्माहिपरमात्मा स्वतंत्रोऽधिगुणः, जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः ज्ञाज्ञौ द्वावीशानीशौ, तस्मिंल्लोकाः श्रिताः सर्वे इत्यादिश्रुतिभ्यो नियन्तृत्वनियम्यत्व, स्वतंत्रत्वपरतंत्रत्व सर्वज्ञत्वाऽल्पज्ञत्वैकत्वानेकत्वविभुत्वाणुत्वादिभिः पार्थक्येऽपि जीवेशयोः न सर्वथा पार्थक्यं किन्तु शक्तिमतः शक्तिरिव स्वाभाविकभिन्नाभिन्नत्वमेव। इत्थञ्च सकलां अपि बद्धमुक्तादिभेददक्षजीवा रूप्यकादिद्रव्याणां कार्षापणादिव भगवदंशभूताः परमात्मनोऽपृथक्स्वभावा, यतः परिसीमितशक्तिकोजीवगणोऽसीमितशक्तिकश्चपरमात्मा, ततश्चैकमेव चैतन्यं परिपूर्णनिरपेक्षकैवल्यावस्थयां ब्रह्मपदवाच्यम्,

अहंबोधसंपृक्तविशिष्टव्यष्ट्यवस्थायां जीवपदाभिधेयं भवति तत्त्वतस्तु तदंशतया भिन्नं तदपार्थक्येन तदात्मतयाचाभिन्नं तत्त्वमितिपर्यवसितम्। परापरमूर्तिचिदात्मकजगद्धिरण्यगर्भजीवभेदेन द्विधा। **परापर**मूर्तिभेदेनेश्वरस्याप्यक्षरतत्त्वेश्वरभेदेन **द्वैविध्य**मितिरूपचतुष्टयं ब्रह्मणश्चिदीश्वरपदेन संगृहीतम्।

## अचित्पदार्थविचारः

चेतनभिन्नाचिद्वर्गोपि विक्रियायुक्तत्वेसत्यनाद्यनन्तात्मको ब्रह्मतन्त्रसत्ताश्रयः। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्,' अव्यक्तात्पुरुषः परः,' 'अजामेकां लोहितशुक्लकृष्णाम्,' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इत्यादिश्रुतिभ्यः प्रधानप्रकृतिमायादिशब्दवाच्यः प्राकृताप्राकृतकालस्वरूपभेदेन त्रिविधः, तत्र चेतनविजातीयत्वे सति मायाप्रधानादिपदैरभिधीयमानत्वं प्राकृतत्वं, अस्यज्ञानरूपत्वेऽपि ज्ञानरूपधर्माभावादेवाचित्त्वम्। प्रकाशात्मकत्वे सत्यनावरकस्वभावत्वे च सति अचेतनद्रव्यत्वमप्राकृतत्त्वम् भगवद्धामभूषादिकम्। 'आदित्यवर्णं तमसः परस्तादि'तिश्रुतेः। प्रकाशात्मकत्वेन प्रधान कालाभ्यां भिद्यते। तदुभयभिन्नत्वे सत्यचेतनद्रव्यविशेषः कालः 'अथाहं वा नित्यानि पुरुषः प्रकृतिः काल इति श्रुतेः। 'न सोस्ति प्रत्ययो लोके यत्र कालोनभासते' इति प्रमाणवचनाच्च नित्यो विभुश्च कालः, सूर्यपरिस्पंदभेदात्क्षणमुहूर्तादिव्यवहारयोग्यो भवति तत्रप्राकृतकालयोः ज्ञानरूपधर्माभावाच्चाचित्त्वम्। एवं चिदचित्पदार्थास्तत्तद्वैधर्म्यवन्तोऽपि भगवद्धर्मास्तच्छक्तिभूताः। तेषां चिदचिच्छक्तिरूपधर्माणामात्मा नियामकः स्वतंत्रसत्ताश्रयः परमात्मा ईश्वरः, अत एव स्वरूपधर्मादिवैलक्षण्येऽपि चिदचितोः स्वात्मभूतपरमात्मना सहाभेदाभेदः, तादृशभेदाभेदयोः सहावस्थायित्वनियमात्।

## भेदाभेदयोः श्रुत्यादिप्रमाणदिग्दर्शनम्

**ननु** भेदाभेदसामानाधिकरण्यप्रतिपादकश्रुत्यादिप्रमाणं नास्ति भेदवाक्यानामभेदवाक्यानाञ्च भिन्नविषयत्वादिति चेन्नैवम्, श्रुतिपयोधिमज्जनासादिततद्रहस्यरत्नसारपरिपूर्णाशयवतामेवं प्रलपनासंभवात्। चिदचिदीश्वराणां भेदाभेदवचनान्वेषणतत्परश्चेच्छृणुतत्र प्रथमं **वैलक्षण्यपराणि** श्रुत्यादिवचनानि यथा—'सत्यं ज्ञानमनन्तं ब्रह्म, बृंहयति बृंहति तस्मादुच्यते ब्रह्म, एको ह देवः सर्व-

भूतेषुगूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः, साक्षी चेता केवलो निर्गुणश्च, यस्मान्नाणीयोनज्यायोऽस्ति कश्चित्, अणोरणीयान् महतो महीयान्, तस्मात्कृष्ण एव परो देवस्तं ध्यायेत्, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्! गौरनाद्यनन्तवती जनित्री भूतभाविनी सितासिता च सर्वदुघा विभोः, अजामेकांलोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे द्वा सुपर्णा सयुजा सखायाः समानं वृक्षं परिषस्वजातौ। तयोरन्यः पिप्पलंस्वाद्वत्ति अनश्नन्नन्योभिचाकशीति, ज्ञाज्ञौ द्वावीशानीशौ, यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः, सर्वस्य शरणं सुहृत्, एष एवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोनन्ताक्षोनन्तबाहुरन्तगुणोनन्तरूपः, परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच, सर्वान्लोकानीशत ईशनीभिः यतोवाइमानिभूतानिजायन्ते येनजातानिजीवन्तियत्प्रयन्त्यभिसंविशन्ति, भोक्ताभोग्यंप्रेरितारञ्चमत्वा सर्वंप्रोक्तं त्रिविधं ब्रह्ममेतत्, इत्यादि श्रुतिभ्यः। द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। यस्मात्क्षरमतीतोहमक्षरादपि चोत्तम। अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः। तत्र यः परमात्मा स तु नित्यो निर्गुणः स्मृतः। कामात्मात्ववरो योसौ कर्मबंधैः स युज्यते। दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते। क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः,। ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्यताः,। अहं सर्वस्य प्रभवः वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिस्मृतिभ्यश्चसत्यसंकल्पत्वासत्यसंकल्पत्वैकत्वानेकत्वविभुत्वाणुत्वफलदातृत्वफलभोक्तृत्वसर्वज्ञत्वाल्पज्ञत्वभोक्तृत्वनियन्तृत्वनियम्यत्वेशितृत्वेश्यत्व जनकत्वजन्यत्वचित्त्वजडत्वादिधर्मैः **वैलक्षण्यावगमेऽपि**, एष एवाचिन्त्यः, भोक्ता भोग्यं, सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम्, आत्मा वा इदमेक एवाग्र आसीत्, तत्त्वमसि, अहं ब्रह्मास्मि, सर्वं खल्विदं ब्रह्म इत्यादिश्रुतिभ्यः अहं सर्वस्य प्रभवः, मत्तः सर्वं प्रवर्तते इत्यादिस्मृतेः, तदनन्यत्वमारंभणशब्दादिभ्यः पटवच्च, आत्मकृतेःपरिणामाच्चेत्यादिसूत्रैश्चैक्यावगमाच्चिदचितोः ब्रह्मतादात्म्यमवगतम्भवति।

तस्माद् ब्रह्मानात्मकत्वेन वैलक्षण्यावगमेऽपि तदात्मकत्वेनाग्न्यादीनां दाहप्रकाशादेरिव तदैक्यमेव। अत एवैक्यविज्ञानेन सर्वविज्ञानप्रतिज्ञा सूपपादिता भवति, केवलभेदे केवलाभेदेच तदशक्यम्। स चायंभेदाभेदवादो लोकसिद्धभेदाभेदाभ्यां विलक्षणमत एवाचिन्त्यभेदाभेदपदेन व्यपदिश्यते। उक्तञ्च श्रीविष्णुपुराणेऽपि—मूर्तामूर्तादिभेदेन चतुर्विधब्रह्मशक्तियोगेन चिदचिद्भूत भौतिक विलासो यथा 'आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः। भूप मूर्तिममूर्तिञ्च परञ्चापरमेव च ।४७। अमूर्तं ब्रह्मणो रूपं यत्सदित्युच्यते बुधैः ।६८। समस्ता शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं तत्करोति जनेश्वर ॥७१॥ एतत्सर्वमिद विश्वं जगदेतच्चराचरम्। परब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम् ॥६०॥ एतान्यशेषरूपाणि तस्य रूपाणि पार्थिव। यतस्तच्छक्तियोगेन युक्तानि नभसा यथा ॥६८॥ द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते।' इति।

## गायत्रीच्छन्दोऽर्थकथनम् !

इदमेव योगिध्येयं श्रीभगवत्स्वरूपं वेदमातृगायत्रीच्छन्दसा सूपपादितं भवति। तत्र तत्सवितुरित्यत्र सवितृपदं जगत्सूयते यस्मादिति व्युत्पत्त्या, प्रजानाञ्च सवनात्सवितेत्यभिधीयते' इति धर्मोत्तरवचनाच्च प्रसवनोपलक्षित जन्मस्थितिलयकारणवाचकम्। निरतिशयबृहद्ब्रह्मदेवपदेन चाभिधीयते, दिव्यति क्रीडति विश्वसर्गादिभिरिति व्युत्पत्तेः। आत्मानमन्तरो यमयतीति श्रुतिबलात्सर्वभूतेष्वन्तर्यामितया व्यवहरति वा देवः। ब्रह्मादिभिः स्तूयमानत्वेनापि देवत्वं, 'तमेवैकं गोविन्दं सच्चिदानन्दविग्रहम् वृन्दावनासीनं परमया स्तुत्या स्तोषयामीति वचनाक्षिप्यते। यद्वा मोदते इति देवः, एष एवानन्दयतीत्यादिनिर्वचनेभ्यः सवितृदेवशब्दौ ब्रह्मवाचकावेव। एवं भर्गः शब्दोपि भर्जयति ध्यातॄणां कर्माणीति भर्गो दिव्यमंगलवपुर्वाचकः। तथा च श्रुतयः 'यदापश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं महान्तं। तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति, भिद्यते हृदयग्रंथिरित्याद्याः। तथा च जगज्जन्मादिकारणसर्वान्तर्याम्युच्चावचलीलारतसर्वसंस्तुत श्रीकृष्णपुरुषोत्तमस्य मुमुक्षुवरणीयं दिव्यमंगलविग्रहं धीमहीति तत्सवितुरितिमन्त्रतात्पर्यम्बोध्यम्। तस्मात्कृष्ण एव परो देवस्तं ध्यायेदिति श्रुतिः। एवञ्च भेदाभेद एव समीचीनः पंथाः, अयमेव द्वैताद्वैतपदेनापि व्यवह्रियते।

## केवलद्वैतपक्षमुपपाद्यतत्खण्डनम्

**ननु** केवलद्वैतप्रतिपादकशास्त्रविरोधाच्चिदचितोर्ब्रह्मणा स्वाभाविकभेदाभेदासंभवः तथा च श्रुतिः 'जीवेश्वरभिदा चैव जडेश्वरभिदा तथा। जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥ मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः। सोऽयं सत्योऽनादिश्च सादिश्चेन्नाशमाप्नुयात्" ॥ ऋतं पिबन्तौ सुकृतस्य लोके, द्वा सुपर्णा सयुजा सखायावित्यादि श्रुतयः, द्वाविमौ पुरुषौ लोके इत्यादिस्मृतिश्च चिदचिदीश्वराणां परस्परं भेदबोधनपरा इति चेन्न, भावानवबोधात्तथाहि उक्तश्रुतिस्मृतीनां तादृशभेदसिद्ध्यर्थं नैयायिकादिवद्द्वैतवादिभिर्ब्रह्मणोजगदुपादानत्वानंगीकारेऽपि केवलाभेदनिषेधपरत्वमवगन्तव्यम्, अन्यथा श्रुतिस्मृतिवचनादेव तादृशभेदस्वीकारे 'सदेव सौम्येदमग्र आसीत् एकमेवाद्वयंब्रह्म, तदैक्षत बहु स्यां प्रजायेय, नामरूपे व्याकरवाणि, त्रिवृतं त्रिवृतमेकैकांकरवाणि, तत्सृष्ट्वा तदेवानुप्राविशत्, सच्च त्यच्चाभवत्, अयमात्मा ब्रह्म, ऐतदात्म्यमिदं सर्वमित्यादिश्रुतीनाम्, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्, तदनन्यत्वमारंभणशब्दादिभ्यः इत्यादिसूत्राणां, अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते, सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरः स एकः इत्यादिस्मृतीनां च सर्वोपादानत्वसर्वात्मकत्व प्रतिपादनपराणां बाधभिया न केवलभेदपरत्वन्तेषां किन्तूभयविधश्रुत्यादिसद्भावेऽचिन्त्यभेदाभेदपरत्वमेवेतिरहस्यम्। **एतेन** कार्यकारणयोरप्यत्यन्तभेदपक्षोऽपि निरस्तः, गौरनाद्यनन्तवती तत्सदासीत्, अथैवमाहुः सत्यकर्मेति, इदं सर्वमसृजद्यदिदं किञ्च, इत्यादिश्रुतिभ्यः, ऊर्ध्वमूलोऽधाक्शाख इत्यादिस्मृतेश्चसिद्धंकार्य कारणयोः सामानाधिकरण्यमत्यन्तभिन्नयोर्गवाश्वयोरिवासंभव एव स्यात्। एवं येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति, यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादित्यादिप्रतिज्ञादृष्टान्तविरोधात्केवलनिमित्तत्वासंभवोऽपि द्रष्टव्यः। तथात्वे च कुलालादिज्ञानेनापि कार्यजातं विज्ञातं स्यान्न च तथा दृष्टं श्रुतं वा, उपादानत्वे तूपादानोपादेययोस्तादात्म्याद्युक्तं तज्ज्ञानेन तज्ज्ञानमिति न च कश्चिद्विरोधः। नच तथासति विकारित्वापत्तिरितिवाच्यम्, शक्तिविक्षेपलक्षणपरिणामांगीकारेणादोषात्। 'यथोर्णनाभिः सृजते गृह्णते च यथा सतः पुरुषात्केशलोमानि यथा पृथिव्या ओषधयः संभवन्ति, तथाक्षरात्संभवतीह विश्वमि-

त्यादिश्रुतेः स्वरूपलक्षणपरिणामानभ्युपगमाच्च । वेदास्तं परादु र्य अन्यत्रात्मनो वेदान्वेद, लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद, सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेत्यादि श्रुतिप्रामाण्याच्च केवलद्वैतमतन्न शास्त्रसंमतमित्यवगम्यते ।

**केवलाऽद्वैतमतस्यासङ्गतत्वोपदर्शनपुरस्सरं जगत्सत्यत्वनिरुक्तिः ।**

अथाधस्तादुक्तरूपा न केवलद्वैताक्षेपपरिहारगर्भब्रह्मपरिणामजगत् सत्यत्वनिरुक्तिः शास्त्रप्रामाण्यादेव च केवलाद्वैतमतमप्यसंगतमेव–तथा हि अथैकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चनेत्यादिश्रुतिबलात् सजातीयविजातीयस्वगतभेदासहं सर्वधर्मशून्यं शुद्धबुद्धमुक्तस्वरूपं निर्गुणं चिन्मात्रमेव परमार्थं वस्तु, नान्यत् ब्रह्मभिन्नत्वेन तेषां भ्रांतिकल्पितत्वादिति चेन्न, उक्त श्रुतेरन्यार्थपरत्वस्योपपादयिष्यमाणत्वात् । नेन्द्रियाणि, नानुमानमिति श्रुतेः प्रत्यक्षानुमानाभ्यामद्वितीयनिर्विशेषवस्तुज्ञानासंभवात् , यन्मनसा न मनुत इति श्रुतेर्मानसप्रत्यक्षाविषयत्वाच्च, सावयवपदार्थस्यैव प्रत्यक्षादिविषयत्वनियमेन त्वदभिमतनिर्विशेषवस्तुनः शाखाचन्द्रवत्कल्पितसम्बन्धस्याप्यसंभवेन सर्वप्रमाणाविषयत्वात् , विषयत्वे च–ब्रह्म मिथ्या, प्रमाणविषयत्वात्त्वन्मतसिद्धप्रपञ्चवदित्यनुमानेन ब्रह्मणोऽपि मिथ्यात्वप्रसंगाद्वैतापत्तिश्च स्यात् । न च ब्रह्मणः स्वानुभूतीतरमानान्तरावेद्यत्वं त्वदुक्तदूषणमस्माकं भूषणमेवेति वाच्यम् , एवं सति निर्विशेषाद्वयवस्तुनि दोषबन्धमोक्षतत्साधनादिप्रदर्शनपराणां वेदान्तानां वैयर्थ्यप्रसंगात् ।

**ननु व्यावहारिक द्वैतादेरस्माभिरंगीकारेण** बंधमोक्षादिपरशास्त्रवैयर्थ्यासंभवः **तथोक्तम्–जीवईशो विशुद्धाचित्** तथा जीवेशयोर्भिदा । **अविद्यातच्चितोर्योगः** षडस्माकमनादयः' इति । न चैवं द्वैतसिद्धयापसिद्धान्तापत्तिः, व्यवहारकालमात्रसिद्धसर्ववस्तूनामविद्यारोपितसत्ताकतया ज्ञानबाध्यत्वेनानादित्वेऽपि सान्तत्वाऽभ्युमगमेनाविरोधात् । आरोपितानारोपितयोरेव बाध्यत्वाबाध्यत्वनियामकत्वेनानादित्वाविशेषेऽपि शुद्धचितस्त्रिकालाबाधनित्यशुद्धबुद्धमुक्तस्वभावत्वम् , दृश्यजडात्मकबन्धजातस्य च मिथ्यात्वं, तस्य सत्यत्वांगीकारे च निवृत्त्ययोगः, ज्ञानमात्रनिवर्त्यस्य सत्यत्वायोगात् । सर्वत्रादिसिद्धसत्यास्यात्मनोनिवृत्त्यदर्शनाच्चाविद्याकार्याहङ्काराध्यासाजीवेश्वरादिसर्वव्यावहारिकप्रपञ्चजातस्याध्यस्तत्वमंगीकर्तव्यम् । अध्यासविषयत्वेन चारोपितरजतस्य शुक्तिसाक्षात्का-

गन्निवृत्तिवदनाद्यविद्यावासनयासच्चिदानन्दशुद्धात्मस्वरूपापरिज्ञानादधिष्ठानस्वरूपेत-स्मिन्नध्यस्तस्य संसारदशायां व्यवहारमात्रसिद्धद्वैतप्रपञ्चजातस्य मिथ्याभूतस्य सदेव सौम्येदमग्र आसीत्, सर्वं खल्विदं ब्रह्म, नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति इत्यादिश्रुतिसिद्धात्मविज्ञानादेव सकलद्वैतप्रपञ्चनिवृत्तिः, यथोक्तं भाष्य-कृता—"सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिको लोकव्यवहारः, तमेत-मविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेय व्यवहाराः लौकिका वैदिकाश्च प्रवृत्ताः। सर्वाणिचशास्त्राणि विधिनिषेधपराणि। एवमयम-नादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोक-प्रत्यक्षः। अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्ववेदान्ता आरभ्यन्त" इति न कोपि विरोधो निर्विशेषाद्वैतसिद्धान्त इति चेन्न, ज्ञानमात्रेण ज्ञानसमान-विषयकाज्ञानानुपादानकस्य सत्यस्य तज्ज्ञानप्रागभावस्य,घटादिज्ञानेन पटादिज्ञानस्य, दोषदर्शनेन रागादेः, सेत्वादिदर्शनेन ब्रह्महत्यादेः, सत्यस्यैव निवृत्तिदर्शनेन ज्ञानम-ज्ञानस्यैव मिथ्याभूतस्यनिवर्तकमिति त्वत्सिद्धनियमस्य व्यभिचारितया बंधजातस्य निवृत्यर्थं मिथ्यात्वस्वीकारे प्रमाणाभावात्। दृश्यते च सत्यस्यैव धनवस्त्रादेः दाना-दिना विनाशः, सत्यस्यैव च विषादेर्मन्त्रादिना, मलपंकादेश्च क्षालनादिना निवृत्तिः। तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिश्रुतेरपि प्रामा-ण्यसंभवे सत्यस्य निवृत्तिर्न भवतीतिरिक्तं वचः प्रतिभाति। यत्तु ज्ञाननिवर्त्यत्वा-न्यथानुपपत्तिर्जगन्मिथ्यात्वे मानमिति तन्न अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यमित्यादि श्रुत्या नामरूपात्मकजगतः सत्यत्वश्रवणाज्ज्ञान-निवर्त्यत्वेन मिथ्यात्वव्यभिचारस्य पूर्वं प्रदर्शितत्वात्। किञ्च प्रपञ्चमिथ्यात्ववादो यदि श्रुतिप्रतिपाद्यः स्यात्तर्हि शुक्तिरजतादिदृष्टान्ताः क्वापि वेद उपन्यस्ताः स्युः सूत्रिताश्च स्युर्न च तथा दृश्यते उपपद्यते चेति सत्कार्यसाधकास्तर्का अप्यत्रा-नुसन्धेयाः। न च ब्रह्मज्ञानेतराबाध्यत्वे सद्भिन्नत्वे च सति चिदन्यन्मिथ्या-सत्त्वानधिकरणत्वात् दृश्यत्वात्परिच्छिन्नत्वाज्जडत्वाच्च शुक्तिरजतवदित्यनुमानमेव जगन्मिथ्यात्वे प्रमाणमिति वाच्यम्, सत्त्वानधिकरणत्वेन मिथ्यात्वे तव मते शुद्धस्यापि ब्रह्मणः सत्त्वानधिकरणत्वाभ्युपगमात्, शुद्धं ब्रह्म मिथ्या सत्त्वानधि-

करणत्वात्त्वदभिमतप्रपञ्चवदित्यनुमानेन सत्प्रतिपक्षितत्वात्। दृश्यत्वादिहेतूनामपि मनसैवानुद्रष्टव्यं, दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरित्यादिश्रुत्या परमात्मनो दृश्यत्वसमर्थनेनाभासीकृतत्वात्। न चोपहितविषयिकेयं श्रुतिरितिवाच्यम्, 'अपि च संराधने प्रत्यक्षानुमानाभ्या'मिति भवदभिमतसूत्रभाष्ये अपि चैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्तीत्यादिना शुद्धस्यैव दर्शनकर्मताकथनेनोपहितपरत्वासंभवात्। किञ्च ततस्तु तं पश्यति निष्कलं ध्यायमानः, ज्योतिः पश्यन्ति युञ्जाना योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनमित्यादिश्रुतिस्मृतिबाधवज्रभिया, शुद्धस्य ज्ञानाविषयत्वे तदाच्छादकमूलाज्ञानानिवृत्त्यानिर्मोक्षप्रसंगभयेनापि चागत्या परमात्मनो दृश्यत्वेऽपि मिथ्यात्वासंभवेनोक्तहेतूनामाभासत्वमेवं जडत्वपरिच्छिन्नत्वादीनामपीत्याकरग्रन्थे विशेषजिज्ञासुभिर्द्रष्टव्यम्। ननु सदेव सौम्येदमग्र आसीत्, तदेवर्तं तदुसत्यमाहुस्तदेव ब्रह्म परमं कवीनामित्यादिश्रुतावन्ययोगव्यवच्छेदार्थकैवकारो ब्रह्मणः सत्यत्वे विश्वस्य चारोपितत्वे प्रमाणमारोपितत्वादेव च मायोपादानक ब्रह्मविवर्तजगतोऽविद्याकार्यरज्जुविवर्तसर्पादिवन्मिथ्यात्वमिति चेन्न, स्वरूपेणासतो वन्ध्यापुत्रादेरारोपस्य क्वाप्यदृष्टचरत्वेनैकत्र सत एवापणस्थरजतादेरन्यत्र शुक्तिकादावारोपस्य सर्वसंमतत्वेन च स्वभावतोऽसत आरोपासंभवेन विवर्तवादे प्रमाणाभावात्। न चारोपस्य प्रतीतिमात्रमपेक्षितं न विषयसत्यत्वमपि, दृश्यते च रज्वादौ प्रतीतिमात्रेणैव सर्पोद्भावनमिति प्रकृतेऽपि प्रपञ्चप्रतीतिरेव कारणमिति वाच्यम्, असतः प्रतीतेरसंभवात्, कार्यस्य च कारणसत्तासापेक्षनियमात्, भ्रमस्थलेऽप्यारोप्यज्ञानस्यैव कारणत्वेनासतः कारणत्वासंभवात्, संभवे च तस्य सर्वत्र सौलभ्यात्सर्वतः सर्वकार्योत्पत्त्या कार्यकारणनियमभंगप्रसंगात्। ननु वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः प्रमाणत्वे कथमप्रमाणत्वं तस्येति चेन्न, भ्रान्तिर्नामधेयमित्यनुक्त्वा विकारो नामधेयमिति कथनेन परिणाम एव श्रुतितात्पर्यात्। अन्यथा मृत्पिण्डविज्ञानेन सकलमृन्मयविज्ञानवत् रज्जुविज्ञानेन सर्पमात्रविज्ञानस्यासंभवित्वेन येनाश्रुतं श्रुतं भवतीत्यादिना कारणविज्ञानेनाशेषकार्यविज्ञानप्रतिज्ञापि बाधिता स्यात् इति।

## जगतोब्रह्मपरिणामत्वनिरुक्तिः ।

ननु सावयवद्रव्यस्यैव क्षीरादेः परिणामदर्शनात्, निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनमित्यादिश्रुतिसिद्धनिरवयवस्याकाशकल्पस्य विभोः परिणामासंभवः। प्रयोगश्चात्र भवति–ब्रह्म परिणामानर्हं विभुपरिमाणकत्वात्, निरवयवत्वाच्च, आकाशवत्, तस्माद्ब्रह्मविवर्तमेवेदं जगदिति चेन्न, सावयवत्वस्य क्षीरपरमाण्वादौ व्यभिचारितया वस्तुनिष्ठतादृशशक्तेरेव वस्तुपरिणामप्रयोजकत्वादन्यथा दुग्धस्येव जलस्यापि सावयवत्वाविशेषेण दधिभावपरिणामापत्तेर्दुर्वारत्वात्। आकाशस्यापि आकाशाद्वायुरिति श्रुत्या परिणामदर्शनेन ब्रह्म परिणामयोग्यं विभुत्वात्तादृशशक्तिमत्त्वाच्च आकाशवदित्यनुमानेन त्वदुक्तानुमानस्य प्रतिरोधितत्वाच्च। तथा च श्रुतिः परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति। **सत्कार्यप्रमाणिकाः श्रुतयश्चेत्थम्** सदेव सौम्येदमग्र आसीत्। गौरनाद्यनन्तवती जनित्री भूतभाविनी, तत्सदासीत्, प्राणा वै सत्यं तेषामेष सत्यम्, असत्यमाहुर्जगदेतदज्ञाः, अथैनमाहु सत्यकर्मेति, सत्यं ह्येवेदं विश्वमसौ सृजते इति। एतेन तदात्मानं स्वयमकुरुत, तदैक्षत एकोहंबहुस्यां प्रजायेय, तद्भूतयोनिं परिपश्यंति धीरा, यथोर्णनाभि, प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः, तद्वद्भूतानि भूतात्मा सृष्टानि ग्रसते पुनः इति श्रुतिभारतानुमोदितपटेश्वरसंयोगादौ जीवगताज्ञानादौ च कार्ये ईशजीवयोरभिन्ननिमित्तोपादानत्वदर्शनादचिन्त्यशक्ति वेदान्तवेद्यश्रीपुरुषोत्तम एवाभिन्ननिमित्तोपादानात्मकजगज्जन्मादिकारणम् सिद्धं भवति। तत्राव्याकृतरूपेणकर्तृत्वं ज्ञेयम्, कार्यकारणयोस्तादात्म्याभिधानात्। ननु कार्यपूर्वसिद्धस्यात्मनः कर्तृत्वेन कथं कृतिकर्मत्वं कर्तृकर्मणोः सामानाधिकरण्यस्य कुत्राप्यदृष्टचरत्वादिति चेन्न विक्षेपलक्षणपरिणामवादे दोषाभावात्, तथा हि यथाऽप्रक्षीणस्वरूपा एवाकाशादयः शब्दवाय्वादिक्रमेण परिणमन्ति, यथाऽप्रच्युतस्वरूपान्मनसः कामक्रोधादीनां विलक्षणनामुद्भवनं तथाचिंत्यानन्तस्वाभाविकशक्तिमत्परब्रह्मभूतश्रीपुरुषोत्तमोऽपि स्वात्मकस्वाधिष्ठितनिजशक्तिविक्षेपेण जगदाकारं स्वात्मानं परिणमयतीति सर्वं सूपपन्नं, **तदुक्तं**–विक्षेप शक्तिर्लिंगादिब्रह्माण्डान्तं जगत्सृजेदिति।

## अभिन्ननिमित्तोपादानब्रह्मकार्यजगत्सृष्टिकथनम् ।

**सृष्टिक्रमश्चेत्थम्**—आदौ सृज्यमानप्रपञ्चवैचित्र्यकारणप्राणिकर्म सहकृततादृशाचिन्त्यशक्तिमान् श्रीपुरुषोत्तमः महदादिचतुर्मुखादिपर्यन्तमण्डं पूर्ववत्सृष्ट्वा वेदांश्च पूर्वानुपूर्वीविशेषसंस्थायुक्तान्प्रकटीकृत्य ब्रह्मणे तान्मनसोपदिश्य पूर्ववद्देवाद्याकारविसृष्टौ तं नियुज्य स्वयं च तदन्तरात्मतयाऽवतिष्ठते । तथा च श्रुतिः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति । हिरण्यगर्भोऽपि तदनुग्रहाल्लब्धवीर्यस्तैर्वेदशब्दैस्तत्तदाकृतीर्विमृश्य कुलालः पूर्वतुल्यान्घटादीनिव देवादीन्सृजति । तथा च श्रुतिः तदैक्षत एकोहम्बहुस्यां प्रजायेय, सोऽकामयत, तन्मनोऽकुरुत इत्याद्या । एतेन जगद्ब्रह्मोपादानकं न भवितुमर्हति तद्विलक्षणत्वात् अचेतनत्वाद्वा, घटादिवत् इत्यनुमानेन मृदनुपादानकानां रुचकादीनां मृद्विलक्षणानां दर्शनेन चेतनत्वाद्यसाधर्म्यात्प्रधानाद्युपादानकमेव न ब्रह्मोपादानकं जगदिति निरस्तम् । मक्षिकादिभ्यः कृम्यादेः द्रव्याद्गुणादेः, गोमायाद्वृश्चिकस्य, दत्ताग्निदग्धकदलीकाण्डाद्वेत्रांकुरस्य श्वमस्तकोप्तगोधूमयवनीलादेः पलांडुलशुनांकुरस्य विलक्षणस्य कार्यस्योत्पत्तेरुपलंभाद्यत्रयत्रोपादानोपादेयभावस्तत्रतत्र सादृश्यमिति व्याप्तेरनिश्चये **चेतनाद्ब्रह्मणोऽचेतनकार्योत्पत्तिःसंभवतीति।**

## सविशेष ब्रह्मणि सर्वश्रुतिसमन्वयविचारः

नन्वेतावताऽध्यासानिर्वचनात् विश्वसत्यत्वेऽपि निर्गुणाद्वैतश्रुतिविरोधात्कथं सकलगुणगणचैतन्यशक्तिमत्त्वादिधर्मविशिष्ट **चतुर्व्यूह**सविशेषब्रह्मसिद्धिः । तथा च श्रुतयः—निर्गुणं निष्क्रियं शान्तं निरवद्यं निरंजनम् । साक्षी चेता केवलो निर्गुणश्च, एकमेवाद्वितीयम् ब्रह्म नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति इत्याद्या इति चेन्न, शास्त्रपर्यालोचनया दोषाभावात् , तथा हि गुणी सर्वविद्य इति तत्रैव वीप्सया सगुण श्रुतिविरोधेन निर्गुणपदानां हेयगुण निषेधपरत्वेन नैराकांक्ष्यात् , न च निर्गुणमिति सामान्यपदप्रयोगाद्धर्ममात्रापवाद इति वाच्यम् , तेषां स्वाभाविकत्वश्रवणात्, स्वाभाविकवस्तुनश्च निषेधाविषयत्वनियमात् । अन्यथा अग्नेर्दहनप्रकाशनादिस्वाभाविकधर्मोऽपि निषेद्धुं शक्यः स्यात्केनापि विदुषा, गीतं च स्वयमेव भगवता गीतायां—'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महावाहो ययेदं धार्यते जगत् , 'यया जगद्धार्यते

सा कथमन्तर्जगत्स्यादिति प्रकृत्युपलक्षितसकलगुणादिकमपि भगवतोऽलौकिकमेवेति बोध्यम् । परमात्मनि सर्वधर्मानंगीकारे तदतिरिक्तवस्तुमात्रानंगीकारे च तदैक्षत बहुस्यां प्रजायेय, परास्य शक्तिर्विविधैव श्रूयते, यतो वा इमानि भूतानि जायन्ते, अक्षरात्परतः परः, प्रधानक्षेत्रज्ञपतिर्गुणेशः नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, इत्यादिश्रुतिसिद्धेक्षणकर्तृत्वबहुभवन संकल्पाद्याश्रयत्वगुणशक्त्यादिमत्त्वजगज्जन्मादिकारणत्वाक्षरपरत्वक्षेत्रपतित्वादि नानात्वप्रतिपादकानां श्रुत्यादीनां बाधाच्छास्त्रबहिर्भूतत्वप्रसंगो दुर्वार एवेति ।

## नानात्वनिषेधकश्रुतिविरोधपरिहारः

नापि नानात्वनिषेधकवाक्यविरोधः । तस्य कारणे नानात्वनिषेधपरत्वात्, इह जगत्कारणे ब्रह्मणि नानात्वं नास्ति कारणस्य सर्वशास्त्रे एकत्वप्रतिपादनात् । नानेव दर्शनेनैव मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति पौनःपुन्यजन्ममरणादिसंसारभाग् भवति, किमुत तत्त्वतो नानात्वदर्शनेनेत्यर्थः । किञ्चोक्तश्रुतिभिः सत्यजगतोनिषेधे सत्यत्वाविशेषात् ब्रह्मणोपि निषेधापत्तिः । असत्यस्य च प्राप्तेरसंभवात्कथं निषेध इति विकल्पासहत्वेनापि जगत्स्वरूपनिषेधासंभवेन कारणे एव नानात्वं निषिध्यत इति निश्चयः । न च नेति नेतीति श्रुतिः सामान्यनिषेधबलान्मूर्तादिनामरूपं प्रतिषिध्य नीरूपंनित्यशुद्धबुद्धमुक्तस्वभावमद्वितीयं ब्रह्म प्रतिपादयतीति वाच्यम्, प्रकृतं यन्मूर्तामूर्तप्रपञ्चमेतावदेव ब्रह्म न भवतीति श्रुतितात्पर्यात् । न तु प्रपञ्चस्वरूपनिषेधपरत्वमतत्परत्वात् श्रुतेः । भोक्ताभोग्यं प्रेरितारं च मत्वा सर्वं त्रिविधं ब्रह्म एतदित्यन्यत्रापि त्रिरूपत्वप्रतिपादनेन सर्वथाद्वैतपरत्वाभावात् । तथैव यत्र द्वैतमिव भवतीत्यादिश्रुतेरपि स्वतंत्र द्वैतनिषेधपरत्वेन निराकांक्षतया स्वसिद्धान्ते विरोधाभावात् ।

## तत्त्वमस्यादि श्रुतिसमन्वयः ॥

तत्त्वमसि, अहं ब्रह्मास्मीत्यादिमहावाक्यार्थोऽपि सुसंपादोभवति, यथासर्वज्ञः सर्वशक्तिसमन्वितः स्वतंत्रसत्ताश्रयः श्रीपुरुषोत्तमस्तत्पदार्थः । तदात्मकपरतंत्रसत्ताश्रय श्चेतनस्त्वं पदार्थः । असिपदञ्च तयोस्तादात्म्यबोधकः, इत्थञ्चविश्वात्मपरब्रह्म सर्वज्ञसर्वशक्त्यादिस्वतंत्रसत्त्वावच्छिन्नतत्पदार्थाभिन्नतदात्मकपरतंत्रसत्ताश्रयः चेतनस्त्वमसीति

वाक्यार्थः संपद्यते। एवञ्च भेदबोधकानामभेदबोधकानाञ्च परस्परसमन्वयबलेन स्वभाविक भेदाभेदवाद एव सिद्धो भवति। नहिशास्त्रैकदेशबाधनायाचार्याविर्भावः अपितु तुल्यबलतया सर्वसमन्वयमुखेन तत्त्वप्रदर्शनार्थमिति सर्वशास्त्रसमन्वितश्चिद-चिदीश्वराणां भेदाभेदपरः श्रीमन्निम्बार्कसंमतः पन्थाः।

## कैवल्यसाधनविचारः

एवञ्च सर्वश्रुतिशिखरसूत्रस्मृतिसमन्वयसिद्धसकलब्रह्मरुद्रादिकिरीटकोटि-वन्दिताचिन्त्यशक्तिमन्निरतिशयस्वाभाविककारुण्यवात्सल्यक्षमसौहार्दसत्यप्रतिज्ञत्वादि-गुणाब्धेश्चिदचिदीश्वरानन्याधिपति श्रीपुरुषोत्तमस्य कृपया तत्पादारविन्दमकरन्दा-स्वादनलोलुपे साधके दैन्यादिसंपदा परम प्रेमलक्षणा परा भक्तिस्तस्यैव परमात्मनो जायते। उक्तंच गोपालतापनीयेभगवता ब्रह्माणं प्रति–यथा त्वं सह पुत्रैस्तु यथा रुद्रो गणैः सह। यथा श्रियाभियुक्तोऽहं तथा भक्तो मम प्रियः इति, भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुंच परंतप। भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। मद्भक्तएतद्विज्ञाय मद्भावायो पपद्यते। यो मद्भक्तः स मे प्रियः इत्यादिबहुशो गानाच्च। किञ्चानन्यभक्तानात्मानं ध्यायमानान्निरतिशयप्रीतियुक्तान्स्वयमपि ध्यायति भगवानिति स्वयमेवाह राजधर्मे युधिष्ठिरं प्रति–शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः। मांध्यायन्पुरुषव्याघ्र ततो मे तद्गतं मनः इत्यादि।

## भक्तितत्त्वदिग्दर्शन पुरस्सरं मुक्तिस्वरूपोपदर्शनम्

भक्तिश्च साधनरूपा फलरूपा चेति द्विधा। तत्र पराभक्तेः साधनरूपा प्रथमा, तथोक्तं पञ्चरात्रे–सुरर्षेविहिता शास्त्रे हरिमुद्दिश्य या क्रिया। सैव भक्तिरिति प्रोक्ता यया भक्तिः पराभवेदिति। सापि वैदिकी पौराणिकी चेति द्विधा। शांडिल्यविद्या मधुविद्यादिरूपा वैदिकी, तत्र त्रैवर्णिकाधिकारः। पुराणादिरीत्या भगवदाराधन-दर्शिका द्वितीया तत्र सर्ववर्णाधिकारः। यथोक्तं पाद्मे–सर्वेऽधिकारिणोह्यत्र हरि-भक्तौ यथा नृप इति। फलरूपा तु स्वस्ववर्णाश्रमोचितकर्माद्यनुष्ठानोत्तरयोगाभ्या सलब्धभगवदनुग्रहादात्मज्ञानोत्तरभाविनी प्रेमलक्षणाभक्तिः। सैव ध्रुवा स्मृति-रुच्यते श्रुतौ–आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः इति। एवञ्चानयैव प्रेमलक्षणया भक्त्या भगवत्कृपाफलं सर्वकर्मादिध्वंसपूर्वकाविद्यानिवृत्त्यात्मकपरिपूर्ण-

सच्चिदानन्दब्रह्मानुभूतिसन्ततिर्मोक्षलक्षणं भक्तिरसो भवति । तदेव च भगवद्भावा-पत्तिसायुज्यादिपदैरभिधीयते । भक्त्या रस्यते आस्वाद्यते परमानन्द इतिव्युत्पत्तेः। श्रीभगवत्साक्षात्कारानुभवतो भक्तिरेनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूय-सीति श्रुतेश्च। भक्त्या मामभिजानाति, ततो मां तत्त्वतो ज्ञात्वा।- मनोगतिर-विच्छिन्ना हरिप्रेमपरिप्लुता। अभिसन्धिविनिर्मुक्ता भक्तिर्विष्णुवशंकरीति। एतदुक्तं भवति—अनादिकर्माधीनसदसद्विवेचनज्ञानदरिद्रो देवमारभ्याकीटपतंगेभ्यः तत्तच्छ-रीरसंयोगवियोगात्मकसंसारचक्रे वंभ्रम्यमाणः करुणावरुणालय श्रीभगवन्निर्हेतुक-पाकटाक्षावलोकनविभवसंपन्नः आचार्यैकदेवस्तदुपदिष्टमनुतिष्ठन्प्रपत्तिलक्षणप्रसादपा-त्रीभूत्वा भगत्साक्षात्कारजन्यकर्मध्वंसपूर्वकतद्भावापत्तिलक्षण मोक्षं लभत इति। तत्साधिका परा भक्तिरेवेति रहस्यमिति अलं विस्तरेण।

**इतिश्री ( सर्व ) वेदान्तसारसंग्रहे निम्बार्कदर्शनं नाम तृतीयस्तवकः॥**

---

## अथ शुद्धाद्वैतदर्शन सारसंग्रहः॥

### शुद्धाद्वैतिप्रक्रिया दिग्दर्शनम्।

**अथ शुद्धं ब्रह्म** जगज्जन्मादिकारणं स्वेच्छावशाल्लीलयातिरोभूतानन्दांशे जीवभावेन चिदानन्दोभयांशतिरोभावे सति जडजगद्रूपेण चाविर्भूतमपि चिन्ता-मण्यादिवदखण्डसच्चिदानन्दविग्रहं प्रपत्तिप्रवणजीवमपुनरावृत्तिपदभाजं करोति इति शुद्धाद्वैतिनोगिरन्ति, सूपपादितञ्च स्वतन्त्रे सुनिपुणैस्तैर्यथा—वस्तुतत्त्वजिज्ञासुभिरन्वय व्यतिरेकाभ्यां तदेव विजिज्ञास्यं यत्तत्त्वं सर्वत्र सर्वदाभवेत्, तस्मिन् ज्ञात एव सर्ववस्तुस्वरूपंविज्ञातं भवतिनान्यथा **उक्तञ्च** 'एतावदेव जिज्ञास्यं तत्त्वजिज्ञा-सुनात्मनः। अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा' इति। तच्च वस्तुतत्वं' मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः। कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिक' मिति। तत्र सर्ववस्तुष्वेकरूपेण विद्यमानतान्वयः, विशेषेण सर्ववस्तुभ्यो व्यति-रिच्यत इति व्यतिरेकः एताभ्यामेव वस्तुवस्तुतत्त्वयोः परिशोधनंभवति, तथा

हि परिवर्तनशीलविविधवस्तुरूपजगदन्तर्गतमपरिवर्तनशीलं सदैकरसं वस्तुतत्त्वम्। उपपद्यते च घटपटादिकारणपरम्पराविचारेऽन्ततोगत्वाऽवशिष्टं परमाणुमात्रमपि काल्पनिकमेव। विशेषबुद्धेर्विवरं मनाक् च पश्यामि यन्न व्यवहारतोऽन्यत्। इतिश्रीमद्भागवतोक्तेः। उपलभ्यते च ततोऽपि सच्चिदानन्दात्मकभगवदंशसत्प्रतीति। अस्तीत्येवोपलब्धव्यः इतिश्रुतेः। तदेव शुद्धंब्रह्म गीतं ब्रह्मवादिभिः।

**तदुक्तं सुबोधिन्यां** (श्री भा.द्वि. स्कन्धे:)-'घटः सन् पटः सन् आस्त इति प्रियमिति च सर्वत्रैकस्यान्वयः। विशेषेणातिरिच्यत इति व्यतिरेकः। घटादिभ्यः किमतिरिच्यते, घटस्तु घटान्नातिरिच्यते यथापटः पटात्। किन्तु सत् घटादतिरिच्यते पटादपि। एवंसर्वत्र यत्सर्वं सःसर्वस्मादतिरिच्यते तद्ब्रह्मैव। ब्रह्मरूपंजगत् ज्ञातव्यं जगतो व्यतिरिच्यत' इति। एवं चिदानन्दांशेऽपिबोध्यम्। अविभक्तं च भूतेषुविभक्तमिव च स्थितमिति भगवद्वचनात्। सिद्धान्तमुक्तावल्यामपि परंब्रह्मतुकृष्णो हि सच्चिदान्दकंबृहत्' इति। 'कृष्णात्परंनास्तिदैवं वस्तुतो दोषवर्जितमित्यन्तःकरणप्रबोधोक्तेश्च श्रीकृष्ण एव तादृशं ब्रह्मेति। जीवोऽपि तिरोहितानन्दांशो भगवदंश एव स च स्वांश एव न तु विभिन्नांश इति। परिच्छिन्नानियतनामरूपचराचरजगत्प्राकृतविशेष गुणशून्याप्राकृताशेषविशेषसहिताशेषोपनिषद्वेद्यनियतनामरूपापरिच्छिन्नब्रह्मांशभूतमेव। पादोस्य सर्वा भूतानीति श्रुतेः। एतेन गुणी सर्वविद्य केवलो निर्गुण श्चेत्यादि श्रुतिविरोधोऽपि दूरनिरस्तः। प्राकृताप्राकृताभ्यामेव तथात्वात्। एतदुक्तं भवति अस्यैव शुद्धब्रह्मणः तिरोहितचिदानन्दत्वे जडत्वम्, आनन्दांशमात्रतिरोभावे जीवत्वम्। आविर्भूतसच्चिदान्दांशत्रयत्वमन्तर्यामित्वम्, ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतींगना॥ इति भगवच्छब्दवाच्य-धर्माणां तिरोभावोबन्धो जन्ममरणादिरागरूपं विपरीतज्ञानञ्चाविद्ययैव जीवे भवन्ति। तथा नैतादृशस्य जीवस्याविद्यकं ब्रह्मस्वरूपे तद्धर्मेषु च विपरीतज्ञानं भवति। जडे तु चित्तिरोभावादैश्वर्यादीनामप्यभावो बोध्यः, चेतनधर्मत्वात्तेषाम्। तच्च जड-जीवरूपे ब्रह्मण्यब्रह्मत्वेन स्वरूपाज्ञानम्। सत्यत्वाद्यनेकाऽलौकिकधर्मेषु चासत्य-त्व विकारित्वाद्यनेकलौकिकत्वेन ज्ञानम्। एवं च सत्यविद्यासम्बन्धेन विषयकृता लौकिका एव प्रकृतिसंबंधसहकृतेन्द्रियज्ञानविषयाः प्राकृताः जडजीवधर्मास्तैः

शून्यम्, प्रकृतिसम्बन्धसहितेन्द्रियाविषया अप्राकृतास्तैः सहितमशेषोपनिषद्वेद्यं शुद्धमेव ब्रह्म, रमणार्थमेव नामरूपवैचित्र्येण स्वाविर्भावेच्छयोच्चावचजगदाकारेणानन्तशक्तित्वात्सच्चिदानन्दांशानेव यथानुरूपेण तिरोभाव्य जडजीवान्तर्यामिरूपेण स्वयमेव प्रादुर्भूतम्। 'सएकाकी न रमते सद्वितीयमैच्छत्, एकोऽहं बहु स्याम् प्रजायेय, सच्च त्यच्चाभवत्. इत्यादिश्रुतिः। 'लोकवत्तु लीलाकैवल्यमितिसूत्राच्च। आविर्भावस्तु विद्यमानस्य वस्तुनो जीवान्तर्यामि साधारणानुभवविषयतायोग्यत्वम्, तदयोग्यत्वं तिरोभावः। **तदुक्तं तत्त्वदीपे** (श्रीमद्वल्लभाचार्यचरणैः) 'आविर्भावतिरोभावौशक्ती वै मुरवैरिणः। भक्त्या त्वाद्यो द्वितीयस्तु तदभावाद्धरौ सदा ॥ १३८ ॥ सर्वाकारस्वरूपेण भविष्यामीति या हरेः। वीक्षा यथा यतो येन तथा प्रादुर्भव त्यजः ॥१३९॥ मृदादिभगवद्रूपं घटाद्याकारसंयुतम् मूलेच्छातःतथा तस्मिन्प्रादुर्भावो हरेस्तदा ॥ तिरोभावस्तथैव स्याद्रूपान्तरविभेदतः' ॥ १४०॥ इति।

## आविर्भावतिरोभावनिरुक्तिः।

नन्विदमसंगतमुत्पत्तिविनाशव्यतिरेकेणाविर्भावतिरोभावयोर्दुर्निरूपत्वात्। तथा हि–स्वकालात्पूर्वमपिकारणावस्थकार्यस्याविर्भावोदर्शनयोग्यत्वमात्रमेव भवदभिप्रेतम्, तज्जननस्यवक्तुमशक्यत्वात्। तथासति शक्य करणाभावेन कार्यानुत्पादस्याकस्मिकत्वादस्य वा प्रसंगो दुर्वारः। शक्तस्याशक्तिप्रसक्त्याकार्यकारणभावासिद्धौ तत्तत्पदाभिधायकपदशक्तेरभावेन लौकिकवैदिकव्यवहारोच्छेदप्रसंगश्च स्यात्। न च कारणाद्बहिर्भाव एवोत्पत्तिः कारणे तिरोभाव एव च विनाश इत्यभ्युपगमे नोक्तदोष इति वाच्यम्। यत्र वटादिफले शतशो बीजानि भवन्ति, तानि च प्रत्येकबीजानि बहूनि फलानि जनयन्ति पुनश्च तेभ्यो बीजानीति परम्परायां मूलभूतफलावतां युगपदुत्पत्तिप्रसंगापत्तेः, कार्याणां कारणावस्थत्वं त्वयांगीकारात्। न च विमतः प्रवाहोऽनादिः प्रवाहत्वाद्बीजांकुरवदित्यनुमानेनानादित्वसिद्धौ निमित्तान्तर समवधानासमवधानाभ्यां व्यवस्थया क्रमोपपत्तौ कुतो दोष इति वाच्यम्। यत्र गोधूमादिबीजनाशे वेणुगोधूमेभ्यो गोधूमानां तुलायश्रृंगात्कदल्याः काशादिक्षोश्चांकुरोत्पत्तिस्ततस्तेभ्यो गोधूमादिभ्यो वेण्वाद्यनुत्पत्तिस्तत्रादौ पश्चाच्च कारणाविर्भावकार्यवादस्य व्यभिचारात्। विमतः प्रवाहः सादिः प्रवाहत्वात् वैणवगोधूमप्रवाहवदिति हेतोः साधारणत्वाच्च। उत्पत्तेरवस्थान्तरत्वस्वीकारे तन्त्ववस्थानुपमर्दे पटावस्थाविशेषस्य

कादाचित्कत्वेन जन्यत्वमेव स्वीकृतं स्यादिति घटकुट्टीप्रभातवृत्तान्तापातः। एवं पुत्रस्यापि पित्रवस्थान्तरत्वे पिण्डावस्थानाशवत्पितुर्नाशप्रसंगश्च स्यात्। किञ्चदुर्वचत्वादपि तत्राभिमताविर्भावतिरोभावयोरशक्यसमर्थनमेव तथा हि तयोर्नित्यत्वे सकलकार्योपलम्भानुपलंभयोः सातत्यप्रसंगात्। सहावस्थानानियमेनतयोरिष्टापत्तेरसंभवात्। अनित्यत्वे च स्वकारणाद्बहिर्भावस्य तत्रैवान्तर्भावस्य चावश्यवाच्यत्वेन कार्यान्तरवत्तदीययोरपि पुनस्तथात्वेऽनवस्थापातात्। न चानादिरियमनवस्था न दोषायेति वाच्यम्। बहु स्यामिति श्रुतिविरोधेनानादित्वासंभवात् तस्मादाविर्भावतिरोभावयोर्दुर्वचत्वेन सत्कार्यवादस्यासंगतिरेवेति चेन्न, इदमस्मिन्कालेऽस्मिन्देशे एतस्मादेवमाविर्भवत्विदमस्मिन्नन्तर्भवत्विति भगवदिच्छयानियतकारणगतशक्तिविशेषयोस्तयोः स्वीकारेणादोषात्। नन्वतिरिक्तशक्तिकल्पने मानाभावः, तथा हि—तन्त्वादीनामविशीर्णत्वेन बीजानामभर्जितत्वेन रूपेणैव कार्यदर्शनाद्रूपभेदमात्रांगीकारेण उत्तेजकाभावविशिष्टमण्यभावविशिष्टवह्नित्वेनवह्नेरेवदाहंप्रति कारणत्ववत्सर्वत्र कार्यकारणभावोपपत्तौ गुरुभूतातिरिक्तशक्तिकल्पनमजागलस्तनवद्व्यर्थमेवेति चेन्मैवम् अवच्छेदकशरीरेमण्यभावस्य प्रतिबन्धकाभावत्वेन प्रवेशे कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्य च कार्यकारणद्वयकल्पना, प्रतिबन्धककल्पना चेति कल्पनात्रयरूपमहागौरवापातात्। अतो दाहं प्रति वह्नित्वेनैव कारणता स्वीकार्या. तन्तु तुरीवेमादिभ्यः पटोत्पत्तिदर्शनात् मृद्दण्डचक्रादिभ्यश्च घटोत्पत्तिदर्शनात्तत्र तत्र कार्यजननशक्तेर्निश्चयात्। न च सा कारणस्वभावा तत्स्वरूपावा तथा सति शीर्णेभ्योऽपि तन्त्वादिभ्यः पटाद्युत्पत्तिप्रसंगात् तस्य सार्वदिकत्वात्। भर्जितेभ्योऽपि बीजेभ्योंकुरोत्पत्तिप्रसंगात्. मणिसमवधानेऽपि वह्नेस्तृणादिदाहप्रसंगाच्च। अतः कालेन. भर्जनेन च नाश्या मणिसमवधानप्रतिबंध्या च स्वभावात्स्वरूपाच्चातिरिक्तैव काचिच्छक्तिः स्वीकार्या। एवं बीजादीनामप्यभर्जितत्वेनैव न कारणता। दावाग्निदग्धेभ्योऽपि वेत्रबीजेभ्यः कदलीकाण्डजननदर्शनात्। वराहशोणितमेदः सेचित कदल्या दाडिमफलजनकत्वस्य चिकित्साग्रंथे प्रसिद्धत्वाच्च। अतस्तत्रापि भर्जनेन काचिन्नाश्यते काचिच्चाधीयते अविर्भावतिरोभावात्मिका शक्तिरित्यवश्यमभ्युपगन्तव्यम्। ननु उच्येते तौ हरेः शक्ती नियताविच्छया तत इति वाक्यात् भगवदिच्छयाविर्भावतिरोभावावेवीकृत्योत्पत्तिनिरोधव्यवस्थापेक्षया लाघवादीश्वरेच्छया वस्तु-

त्पत्तिरेवांगीक्रियतामिचेन्मैवम्। असत्कार्यवादे उत्पत्तेरशक्यसमर्थनत्वात्तथाहि—उत्पत्तिर्नाम प्रागभावो धर्मान्तरं वा। नाद्यः। तस्यानादित्वेन कार्यप्राक्कालेऽपि सत्तयेदानीं घटोत्पत्तिर्भविष्यतीति वक्तुमशक्यत्वात्। नान्त्योऽपि। तस्यैकनिष्ठत्वेऽनुत्पाददशायां कार्यस्यासत्त्वात्कारणादिनिष्ठमेतदिति वाच्यम् तथा सति तद्विषयिण्युत्पद्यत इति प्रतीतिः स्यात्, द्विनिष्ठत्वे च संयुक्ताविमावितिवदुत्पद्येते इमाविति प्रतीतिः स्यात्। आद्यक्षणे घटाद्यभावेनोत्पद्यत इति प्रतीतिश्च न स्यात्। न च दशदिनान्यतीयुः षड्भिर्दिनैर्गन्तेत्यादौ भूतभाविदिवसेष्वपि संख्यारूपधर्मोत्पत्तिवत्प्रकृतेऽपि तथा व्यवहारे क्षत्यभाव इति वाच्यम्, तत्र कालचक्रे सूर्यपरिस्पन्दवशेन दिनानामपि तत्तद्वत्सरादिगततया परिवर्तमानानां तेषामेव संस्कारादिनोपनेयेऽपेक्षाबुद्धया तत्र संख्याकल्पनस्य शक्यत्वेऽपि उत्पत्तेरकाल्पिनकत्वेनोपपत्तौ प्रकृते तथा वक्तुमशक्यत्वात्। अपेक्षाबुद्धया तत्र संख्योत्पत्ति स्वीकारेऽपि न निस्तारः, समवायिकारणं विना केवलनिमित्तकारणेन कार्योत्पत्तेः काप्यदृष्टचरत्वाच्चिन्तामण्यादौ निरुपादानकोत्पत्तिदर्शनन्तु अविक्रियमाणस्यैव तस्योपादनत्वात्। अनुपादानसृष्टिस्वीकारे सर्वस्य समवाय्यसमवायिनिमित्तजन्यत्वं कार्यस्येति वैशेषिकाभिमतवत्सिद्धान्तहानेः। प्रथमान्त मुख्यविशेष्यकशाब्दबोधस्य भवदभिमतत्वेन क्रियाश्रयत्वस्य च कर्तृत्वांगीकाराद्भवनक्रियाश्रये घट एवाख्याताभिहिते लडर्थस्य वर्तमानकालस्य समानपदोपात्तत्वेनान्वयादुत्पत्त्यवहितप्राक्क्षणावच्छेदेन कपालावस्थघटानंगीकारे घटो भविष्यतीति प्रयोगानुपपत्तेश्च। तस्मादसत उत्पत्तिर्न युक्तिमधिरोहति। अतो धर्मी पूर्वसिद्धः सर्वथैवाभ्युपेयताम् ॥१॥ तथा नष्टो घट इति व्यवहारस्य सिद्धये। तदाभ्युपेयस्ते नायं धर्मी सिद्धः सनातनः ॥२॥ एवं च धर्मिनित्यत्वे ब्रह्मतादात्म्यमस्य च। बोध्यं पुरुष एवेदं सर्वंसर्वमिदं जगत् ॥३॥ इदं सर्वं यदयमात्मेत्यादिश्रुति दर्शनात्। तथा सति स भूतं स भव्यमेतच्छ्रुतेर्बलात् ॥४॥ तद्देश व्यवहारेऽपि न क्षतिस्तस्य काचन। शक्तिस्तु सिद्धा प्राक्तेन शक्ताद्धेतोर्बहिः स्थितिः ॥ ५ ॥ आविर्भावतिरोभावस्तस्मिन्नेव स्थितिर्मता अयं '**जनी**' प्रादुर्भाव '**नश**' चादर्शने इति ॥ ६ ॥ धात्वर्थदर्शनादर्थः पुष्टस्तेनात्र कार्यता। कारणत्वं सुघटं तत्प्रकारोऽधुनोच्यते ॥७॥ **तथा हि—परास्य शक्तिर्विविधैव श्रूयते** इति

श्रुतेः। मयूराश्चित्रिता येन शुकाश्च हरितीकृताः। हंसाश्च श्वेतगुरुतः स मे विष्णुःप्रसीदत्विति वाक्याच्च पूर्वोक्ताः स्वाः शक्तीः भगवान्स्वयमेव विभज्य प्रजाययेतीच्छया तत्र तत्र रूपे स्थापिता इत्यवगन्तव्यम्। तौ चाविर्भावतिरोभावरूपौ भगवच्छक्ती कारणव्युत्पन्नौ, भावव्युत्पन्नौ, च ज्ञेयौ। तत्राद्यपक्षे **आविः** प्रकटं **भावयति** उपादानस्थं कार्यं बहिःप्रकटं करोति या निमित्तगता, उपादानगता च शक्तिः साविर्भावशब्दवाच्या। एवं **तिरः** अप्रकटं **भावयति** बहिष्ठं कार्यमुपादानान्तः स्थापयति या शक्तिर्नाशगता सा तिरोभावशब्दवाच्या। द्वितीयपक्षेऽपि आविर्भवनमाविर्भावः तिरोभवनं तिरोभावस्तच्च स्वस्वोपाधौ तथा तथा तदुपलंभो भवतु, तदा तत्र तन्मा भवत्वितीच्छाविषयत्वं तदपि त्रिविधम्। अनित्ये जननं नित्ये परिछिन्ने समागमः। नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधेति। सर्वे च ते स्वभावभिन्ना अपि आविर्भावतिरोभावपदसंगृहीता भवन्ति। इत्थञ्चाविर्भावतिरोभावयोः नित्यत्वं सदातनत्वं ब्रह्मरूपत्वञ्चावगतं भवति। इच्छाया नियामकत्वेनोत्पत्त्याद्यर्थंन्न कारणान्तरापेक्षा। एवं वृद्धादयोऽपि ज्ञेयाइति।

## जगत्सत्याऽसत्यत्वनिरूक्तिः।

तत्र मुख्याया लीलासृष्टेर्नित्यत्वेन ब्रह्माभिन्नत्वात्प्राकृताप्राकृताभ्यां लीलासंपत्तिरिति नैतस्मिन्पक्षे काऽपि क्षतिः। किं तर्हि सर्वा सृष्टिः सत्यैव नेत्युच्यते ख्यातिवादे प्रपञ्चसंसाराभ्यां भेदात्। तत्र प्रपञ्चो न मृषा किंतु संसार एव। **तथोक्तम्** सुबोधिन्याम् विषयता माया जन्या, विषयो भगवानिति। विषये विषयता काचित्स्वीकर्तव्या। अन्यथा भ्रमदृष्टिर्निर्विषया स्यादिति। विषयताजनितं ज्ञानं भ्रमात्मकं विषयजनितं प्रमेति चेति भगवत्कृतप्रपञ्चस्य सत्यत्वं, मायाजनितसंसारस्य चासत्यत्वम्, तथा हि–चक्षुरादीन्द्रियविषयसंबंधे सति किञ्चिदिदमिति सामान्यज्ञानोत्तरं भगवत उद्भूततमोगुणमायाशक्त्या जीवबुद्धिव्यामोहनेन पदार्थयाथात्म्यस्फुरणाभावाच्छुक्तिरियमिति विशेषज्ञानाभावे सति रजतसंस्कारसध्रीचीना सैवबुद्धिश्चाकचिक्यादिधर्मसादृश्यमादाय तत्र रजतं निर्मिमीते। तदिदं बौद्धमेव रजतं बुद्धया विषयी क्रियते। तदेव बौद्धं ज्ञानं भ्रमात्मकम्। तद्विषयश्च मायिको बौद्धः पदार्थः। अयमेव बुद्धौ भातः पदार्थ आन्तरालिकी सृष्टिरित्युच्यते तस्यैव च मिथ्यात्वम्। न तु भगवत्कृतप्रापञ्चिकघटपटादेरिति। इत्थञ्च निरूपाधिकभ्रमे इन्द्रियाणि विद्यमानमेवार्थं विषयीकुर्वन्ति न त्वसन्तम्। अत एव

मनसा वचसा दृष्टया गृह्यतेऽन्यैरपीन्द्रियैः। अहमेव न मत्तोऽन्यदिति बुद्धय ध्वमञ्जसेति भगवदुक्तिरुद्धवं प्रति संगच्छते। बुद्धिस्तु प्रमात्मके निश्चयापरपर्याये ज्ञाने सन्तं विषयीकरोति, विपर्यासे तु स्वकल्पितं रजतादिकं मायिकमेव विषयीकरोतीति तात्पर्यम्। न च यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः। नश्वरं गृह्यमाणं च विद्धि मायामनोमयमित्यत्रेन्द्रियगृह्यमाणपदार्थस्य मायामयत्वेनानृतत्वकथनात् पूर्वोक्तमपि तथैव ग्राह्यमन्यथा भगवदुक्तौ पूर्वापरविरोधप्रसंग इति वाच्यम्, नश्वरमितिपदानां यद्यन्नश्वरंगृह्यते तदेवमायामयमितरत्तु परं सत्यमेवेत्यर्थपरत्वेनादोषात्। अत एव वाचारंभणं विकारो नामधेयमितिश्रुतिव्याख्याने"नतु मिथ्यात्वं शुक्तिरजतवत्। अन्यथा शुक्तिरजतादिकमेव दृष्टान्तीक्रियेत"इति श्रीमदाचार्यैरुक्तम्। एवञ्चाधिष्ठानसामान्यज्ञानाद्बुद्धिकल्पितशुक्तिरजतादिकं प्रपञ्चाद्भिन्नमेवेति न तद्दृष्टान्तो भवितुमर्हति। न च माययैवानिर्वचनीयमुत्पादितं रजतं चक्षुषोपलभ्यताम् भ्रमस्थलेऽधिष्ठानसामान्यज्ञानस्य हेतुत्वे मानाभाव इति वाच्यम्, अनिर्वचनीयरजतसत्वे तत्प्रयुक्तशुक्तिज्ञानप्रतिबन्धतयाऽधिष्ठान रूपशुक्तिज्ञानाभावात्, अन्यस्य च तद्रजतनाशहेतोरभावात् कदापि शुक्तिज्ञानं न स्यात्। एवमुत्पत्त्यादिकमपि विषयताविशिष्टस्यैव जगतो न तु निरुपाधिकस्य तस्य ब्रह्मरूपत्वात्। यथा घटावच्छिन्नानवच्छिन्नकाशयोरेकत्वेन घटाद्युपाधिकृतावास्तवभेदप्रतीत्या घटाकाशश्चलतीति प्रतीतिसत्वेऽपि चलनादिकं वस्तुतो घटधर्मो न तु तदवच्छिन्नाकाशस्य। एवं प्रकृतेऽपि विषयताविशिष्टतद्रहितजगतोरभेदेनोत्पत्त्याद्यसंभवो बोध्यइति।

## मायिकपदार्थविचारः

ननुमायाशक्तिर्भगवतः, "मम माया दुरत्यये"ति श्रुतिस्मृतिभ्यां मायाया भगच्छक्तित्वसिद्धौ मन्मायामोहिताः सर्वे ब्रह्माद्यास्त्रिदिवौकस इति वचनात्सर्वव्यामोहिकापि सा तथा च तत्कृतजगतो बौद्धमेवेति भंग्या त्वयापि जगतो मायिकत्वेनानृतत्वमेवांगीकृतमिति चेन्मैवम्, मायिकत्वेऽपि सत्यत्वानपायात्। तथा हि भगवतः सर्वभवनसामर्थ्यरूपा, व्यामोहिका, ऐन्द्रजालिकविद्या, कापट्यादिचेति चत्वारो मायाशब्दार्थाः। प्रकृते च सर्वभवनसामर्थ्यरूपमायाकरणकः प्रपञ्चो भगवत्कृतो भगवद्रूपश्चेति न स्य मिथ्यात्वम्। आत्मानं स्वयमकुरुत, एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। तस्माद्वा एतस्मादात्मनः आकाशः संभूत इत्यादिश्रुतिभ्यः। अत एव 'परस्यविष्णोरीशस्य मायिनामपि

मोहिनीम् । मायां वेदितुमिच्छामः' इति निमिना मायास्वरूपे पृष्टेऽन्तरिक्षेण 'एभिर्भूतानि भूतात्मेत्यादिना सृष्टिनिरूपणेऽपि न प्रपञ्चस्य मिथ्यात्वं. तत्र सर्वभवनसामर्थ्यरूपमायाकार्यसृष्टेरेव निरूपितत्वान्न तु व्यामोहकमायाकार्यस्येत्यवगन्तव्यम्। न च प्रपञ्चस्य भगवद्रूपत्वे. तत्र मायाशब्दप्रयोगः कथमिति वाच्यम्, विचित्र प्रपञ्चस्य विषयरूपतयामोहकत्वेन तथा प्रयोगोपपत्तेः । वस्तुतस्तु यथा प्रतिमाकाराः संचायकप्रतिमां मृदादिना निर्माय तत्र सुवर्णजलप्रक्षेपणादनायासेन सञ्चायकप्रतिमाकारां सुवर्णप्रतिमा निर्मिमते तथैव सर्वप्रकृतिरूपां मायां संचायकस्थानापन्नां कृत्वा स्वात्मानमेव जगदाकारेण परिणमयति भगवानतो न मायिकत्वेन मिथ्यात्वं किन्तु ब्रह्मात्मकत्वेन सत्यत्वमेवेति ।

## जीवस्वरूपविचारः ।

अथ शुद्धजीवस्य भगवदंशत्वेन संसारिजीवस्यापि तदभेदेन शुद्धब्रह्मस्वरूपत्वात् संसारि जीवशुद्धजीवयोरौपाधिकएवावास्तवो भेदः । अत एव जीवसंसार उच्यते न तु जायते इति निबन्धोक्तसंगतम्, अथ एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत इतिश्रुतौ जलचन्द्रदृष्टान्तेनैकस्यैवात्मनो बहुधादर्शनकथनात् । यथाह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियतेभेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मेति स्मृत्या, अतएवचोपमा सूर्यकादिवदितिसूत्रेण च ब्रह्मप्रतिबिम्बस्यैव जीवभावत्वमित्यवगम्यते । तत्प्रकारश्चेत्थम्–करोति माया चाविद्याच स्वयमेव भवतीतिचेति श्रुत्या त्रिगुणात्मिकाया मायाया रूपद्वयं सिध्यति, तत्रानाद्यनिर्वचनीया चिन्मात्र सम्बन्धिनी, शुद्धसत्त्वप्रधाना वा मायाशब्दवाच्या तत्प्रतिबिम्बितश्चिदीश्वरः । सैवावरणविक्षेपशक्तिमत्परिच्छिन्ना, मलिनसत्त्वप्रधाना वाऽविद्याशब्दवाच्या भवति तस्यां चित्प्रतिबिम्बोजीवः । इति प्रतिबिम्बेश्वरवादिमते । बिम्बेश्वरवादिमते तु जीवोपाध्यन्तःकरणावच्छिन्नं चैतन्यमीश्वरः, अज्ञानेतत्प्रतिबिम्बोजीव इत्युभयथाऽपीश्वरचैतन्यमेकमेव स्वस्वरूपेणैकधा जीवस्वरूपेण च बहुधेति प्रतिबिम्बपक्ष एव श्रेयान् । न चांशो नानाव्यपदेशात्, ममैवांशोजीवलोके जीवभूतः सनातनः इतिसूत्रस्मृतिभ्यामंशत्वं संभावनीयम्, तत्रांशइवांशो न तु स्वभावभूतो वास्तविक इत्यर्थकत्वात्, गौण्या वोपपत्तेरन्यथोक्तश्रुतिसूत्रस्मृतिविरोधो दुष्परिहर एव

स्यादिति चेन्मैवम्। अतिस्वच्छस्फटिकादौ प्रतिविम्वादर्शनेन रजस्तमोऽनभिभूत-मायाया अप्यतिस्वच्छत्वेन तत्र प्रतिबिम्वासंभवे प्रतिविम्वेश्वरपक्षस्य दुरुपपादत्वात्। सृष्टेः पूर्वमाकाशादेरनुत्पन्नत्वात्कारणेप्यन्तः सत्त्वेन बहिरवकाशासत्वाद दूरभावस्याशक्यवचनत्वेन किञ्चिददूरतो मलिनशक्तिसम्वन्धेन वक्रितोपनेत्रादावि वोपपद्यत इत्यपि वक्तुमशक्यम्। किञ्चरजस्तमोऽनभिभूताया मायायास्तद-भिभूताया अविद्यायाश्च सावत्रिकत्वेन व्यापकत्वादुभयोर्विवेकासंभवात्सुतरां प्रतिविम्वयोरप्यविवेकेन जीवेश्वरविभागस्य दुरुपपादत्वमेव। अत एव मायायां चित्प्रतिविम्व ईश्वरो मलिनसत्वाविद्यायां तादृशेऽन्तःकरणे वा ईश्वरप्रतिविम्वो जीव इत्यप्यसंगतम्–मायाया व्यवधायकत्वादीश्वरद्वारकप्रतिविम्वत्वस्य दुरुपपादत्वात्। वस्तुतस्तु त्वन्मतसिद्धरूपरहितचितः प्रतिविम्वासंभवादेव प्रतिविंवपक्षो विद्वद्भिरनादरणीय एव। न च रूपरहितगगनप्रतिविम्ववदेव चित्प्रतिविम्वसंभव इति वाच्यम् गगनस्यापिपञ्चीकरणप्रक्रिययारूपवत्वात्। अपञ्चीकृतस्य तस्य प्रत्यक्षायोग्यत्वाच्च। **तदुक्तम्** तत्त्वदीपनिवन्धे 'नप्रतिस्फुरणं रूपरहितस्य कदाचन। अविद्यायास्तथा वुद्धेर्न शुद्धत्वं कदाचन' इति। तस्मात्प्रतिविम्वपक्ष-स्यासाधुतयांशत्ववाद एव साधीयान्।

नन्वंशपदार्थस्यापि विचारे सिकताकूपवद्विदीर्यमाणात्वेनांशत्ववादोप्यसंगत एव। तथा हि–किमयंशपदार्थः कारणवाची, अवयवो वा भागो वा, कार्यं वा। नाद्यः। घटांशकपालस्य घटकारणवज्जीवस्यापि ब्रह्मकारणतापत्तेः। शरीरवद्ब्रह्मणः सावयवत्वापत्त्या न द्वितीयः पक्षः। नापि तृतीयः। भागभागिरूपद्रव्यस्य नश्वरत्वव्याप्त्या ब्रह्मणोपि तदापत्तेः। जीवस्यानित्यत्वप्रसंगाच्च न तुरीयः पक्षः। नापि विकार्यपक्षः, न जायते म्रियते वा कदाचिदित्यादिश्रुतिव्याकोपात्। निरव-यवस्य ब्रह्मणोंशासंभवाच्च ब्रह्मोपाधिरेव जीवः। अभेदसिद्धये उपाधेरपि प्राती-तिकमेव सत्त्वमुररीकार्यम्, अन्यथा ज्ञाननाश्यत्वासंभवात्। तथा च 'यत्रहि द्वैतमिव भवति तदितरइतरं पश्यति इत्यादिनाविद्यावस्थयां द्वैतदर्शनमुक्त्वा तदभाव-दशायाम्, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केनकं पश्येदित्यादिना तन्निवारयतीत्यविद्यो-पाधिक एव जीवभाव इतिचेन्मैवम्, अवयवपक्षे दोषाभावात्। श्रुतिसूत्रस्मृतिभ्यश्च तथैव निर्णयात्। उक्तंच–'श्रुतितस्तत्त्वसूत्रैश्च स्मृतिभ्यश्चांश एव सः। स्वार्थं

प्रामाण्यमतस्तेषां तेभ्यएवाणुरेव च' इति । तथा हि–पादोस्य विश्वा भूतानीतिश्रुतौ भूतानां जीवानामवयववाचिपादत्वकथनेनांशत्वमेव । यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणा इत्युपक्रम्य सर्वे एवात्मानोव्युच्चरन्तीति श्रुतावग्निविस्फुलिंगदृष्टांतेन जीवात्मनां व्युचरणकथनादपि ब्रह्मांशत्वमेवेति निश्चयते । न चावयवरूपांशपक्षे निष्कलं निष्क्रियं शान्तमित्यादिव्याकोप इति वाच्यम्, उभयविधश्रुतिसत्त्वे विरुद्धधर्माश्रयत्वेन निरवयवत्वसावयवत्वयोस्तत्राविरोधावगमात् । ब्रह्मणः श्रुत्येक समधिगम्यत्वात् । व्यासपादैरपि मन्त्रवर्णादिति अपि च स्मर्यते, अंशो नानाव्यपदेशादित्यादिसूत्रैः नाना व्यपदेशात् क्वचिद्ब्रह्मत्वेन, क्वचिदुत्पन्नत्वेन क्वचिदज्ञत्वेन क्वचिद्रूपवत्त्वेन क्वचिदीशितव्यत्वेन अणुत्वेन व्यापकत्वेन च निरूपणादेतादृश विरुद्धधर्माश्रयत्वं ब्रह्मातिरिक्तस्यासंभवीति ब्रह्मांश एव जीव इति निर्णयाच्चक्रे । ममैवांशो जीवलोके जीवभूतः सनातन इति श्रीभगवद्वानमपि तथैव । न चैवं सार्वज्ञाद्यनुपत्तिरिति वाच्यम् । इष्टापत्ते । भगवदिच्छयैव तत्तिरोधानात् । सूत्रमपि तथैव संवदति 'पराभिध्यानात्तु तिरोहित ततो ह्यस्य बन्धविपर्ययाविति । अयं भाव–जीवानामैश्वर्यादिसद्भावे वैचित्र्याभावाद्भोगोऽनस्यादिति परस्य ब्रह्मणोऽभिध्यानाद्वयोर्भोगेच्छावशात्स्वधर्माणां जीवेषु तिरोधानं कृतवान् भगवान् । ततश्च सर्वज्ञत्वैश्वर्यवीर्ययशः श्रीज्ञानवैराग्यादितिरोभावाद्बन्धत्व दीनत्व सर्वदुःखसहनत्व सर्वहीनत्वापद्विषयत्व देहाद्यहंभावत्व विपर्यासक्तित्वादिभावाः काचकामलादिदोषोपहतनयनस्य वंशोरगज्ञानवद्भगवदिच्छयैव शक्तिभूतानन्दांशजीवे सञ्जाता इति । अथैवमेक एव हि भूतात्मा, यथा ह्ययं ज्योतिरात्मेति श्रुत्योः का गतिरिति चेन्माविभेषि–श्रुत्यर्थानालोचनयैवं वदसि, तथाहि यथा चन्द्रमा जले अंशुरूपेणांशेनानैकधापि कंपादिविशिष्टः सन्, चन्द्ररूपेणत्वेकधैव तथा एक एव भूतात्मा–परमात्मा विशेषाकारेणांशेन भूते भूते प्रतिशरीरमनेकरूपेणावस्थितोऽपि स्वरूपेणैकधैवेतिएकस्य नानात्वदृष्टान्तार्थ श्रुतिर्न तु बिम्बप्रतिबिम्बार्थेति युक्तमुत्पश्यामः । एवमेव यथा ह्ययंज्योतिरात्मा, अतएव चोपमेति श्रुति सूत्रार्थोऽपीति बोध्यम् । इत्थञ्च नानात्वदर्शनेऽपि अंशांशिभावेनाभेदात्साजात्याच्चाभेदोऽपि जीव ब्रह्मणोः सुसंपादो भवति, न तु प्रतिबिम्बादिपक्षे तस्यालीकत्वादिति । एतना-

विद्यावच्छिन्नो अन्तःकरणावच्छिन्नो वा । जीव इत्यवच्छिन्नवादः अंगुल्यादिसंपर्का-चन्द्रादिद्वैतावभासवदविद्यासंपर्काद् ब्रह्माप्यनेकत्वेनावभासमानं द्वित्रादिसंख्यायोगिजी-वपदवाच्यमित्याभासवादोऽपि निरस्तो वेदितव्यः । त्वन्मतेऽन्तःकरणादेरलीकत्वेन जीवस्यापि तथात्वापातेन । द्वा सुवर्णा, द्वावजावीशावनीशौ, ऋतं पिबन्ताविल्या-दिश्रुतिसिद्धजीवेशविभागस्य बाधापत्तेः । अविद्याया नित्यत्वे तदुच्छेदाभावेन मोक्षाभावप्रसङ्गादनित्यत्वे च जीवस्याप्यनित्यत्वापत्तेश्च । किञ्च सार्वदेशिकत्वेऽविद्यायाः कृत्स्नब्रह्मणो जीवभावापत्तिः । प्रादेशिकत्वे च त्वन्मतसिद्धविभुत्व हानिश्चस्यादित्यं-शांशिभावपक्ष एव रमणीयः पंन्थाः श्रुतिस्मृतिसूत्रमर्थितश्चेति अलं प्रसक्तातिप्रसक्तेन । एवं च भगवत्सिसृक्षावशाज्जीवादिसकलं जगत्तत आविर्भवति संजिहीर्षातस्तस्-स्मिन्नेव लीयते । तज्जलानिति श्रुतेः ।

नन्विदमसंगतं स वा एष महानज आत्मा योऽयं विज्ञानमयः, आकाश-वत्सर्वगतश्च नित्य इत्यादि श्रुतिभ्यो जीवस्य व्यापकत्वनिश्चयादौपाधिकजीवभावत्वे तदुपाधिविगमे कथञ्चिल्लयश्रुतिसमन्वयेऽपि त्वन्मते तदसंभवादिति चेन्मैवम् । हन्त । स्वप्नदृष्टगजादिभिया जागरणेऽपि पलायितुमारब्धवानसि, यतो बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते । आरा-ग्रमात्रो ह्यवरोपि दृष्टः, एषोऽणुरात्मा चेतसा वेदितव्यः इत्यादिश्रुतिसिद्धोऽणुरे-वजीवः । न चोक्त· श्रुतिविरोधलेशोपि ब्रह्मप्रकरणस्थत्वात्तासाम् । नापि बुद्धेर्गुणेनै-वाराग्रमात्रत्वम्, बुद्धेर्गुणेनात्मगुणेन चैवेत्यत्रात्मगुणेनापितथाकथनात् । एकदेशस्थ-चन्दनबिन्दुशैत्योपलब्धिवत्सकलशरीरव्यापि चैतन्योपलब्धिसंभवे जीवाणुत्वेपि न क्षतिः । न च गुणगुणिनोः साहचर्यनियमान्नैवमिति वाच्यम्, विविधपुटवे-ष्टिततलस्थस्यापि मृगमदस्य सर्वतः प्रसरितगंधोपलब्ध्या प्रागुक्तवदुक्त नियमस्य व्यभि-चरितत्वात् । तत्रापि सूक्ष्मद्रव्यावयवोपसर्पणांगीकारे विनिगमकाभावेगन्धोपलब्धिवद्र-सोपलब्धिरपिस्यात् । कस्यचिदुग्रगन्धकुसुमादिसंयोगजन्यकरसंलग्नगंधस्य मृदादिना क्षालनेऽपि गन्धोऽनुभूयते तदपि न स्यात् । न च क्षालनेपि तत्र तदव स्थिति संभवः । निरंकुशकल्पनाप्रसंगात् । किञ्च स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति ये केचास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे इति श्रुत्या जीवस्य देहादुत्क्रान्त्यागती ।

स यथा महाराजो जानपदान् गृहीत्वा स्वेजनपदे यथाकामं परिवर्तते, एवमेवैष एतत्प्राणान् गृहीत्वा स्वेशरीरे यथाकामं परिवर्तते स्वयं विहृत्येत्यादिश्रुत्या परिवर्तनविहारादयः। हृदि ह्येष आत्मा, स वा एष आत्मा हृदि योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, गुहां प्रविष्टावित्यादिश्रुत्या हृदिस्थितत्व-मग्निविस्फुल्लिंगदृष्टान्तोपि अणुत्वे एव जीवस्य संगच्छते नान्यथा तस्मादणुरेवजीवः।

## ब्रह्मणः सगुणत्वनिरूक्तिः।

अथास्तु श्रुतिसूत्रस्मृतिसिद्धाऽनौपाधिकाणुस्वभावो जीवो ब्रह्म तु सविशेषं निर्विशेषं वेति प्राग्विवेचितमपि स्थूणानिखनन्यायेन पुनः विविच्यते। किं तावत्प्राप्तम्, **निर्विशेषमेवेति** कथमिति चेच्छ्रुतिप्रामाण्यादेवेति ब्रूमः, तथा च श्रुतयः, यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति, तदेव ब्रह्म त्वं विद्धि नेदंयदिदमुपासते, यस्यामतं तस्यमतं मतं यस्य न वेदसः। अविज्ञातं विजानतां विज्ञातमविजानताम्, अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः इति चक्षुरादिराहित्येन निर्विशेषमेव, अरूपवदेव हि तत्प्रधानत्वादिति सूत्रकारो पि तथैवाह। न च सर्वतः पाणिपादं सर्वतोऽक्षिशिरोमुखम्, सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठतीत्यादिभगवद्गानात् सविशेषत्वमपि सिध्यतीति वाच्यम्। उपा-सनार्थत्वादित्यवेहि, तदित्थं-ब्रह्मणोदुर्ज्ञेयत्वे कथञ्चित्तत्प्रवणत्वेन चित्तशुद्धौ सत्यां स्वयमेव प्रत्यगभिन्नब्रह्मस्वरूपं ज्ञास्यतीति भावनोन्मुखी करणायैव शाखा-चन्द्रन्यायेन, अरुन्धतीदिदर्शयिषयास्थूलनक्षत्रदर्शनन्यायेन वा विश्वतश्चक्षुरुत-विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्पात्। सर्वतः पाणिपादम्, सर्वकामः सर्वगन्धः सर्वरस इत्यादिना लोकसिद्धविशेषवत् ब्रह्मापि सविशेषतया क्वचिन्नि-रूपितं श्रुतिस्मृतिषु तत्र न चरमतात्पर्यम्, तथा सति अस्थूलमनण्वह्रस्वम्, यत्तदद्रेश्यमग्राह्यमचक्षुः श्रोत्रम्, द्वे वाव ब्रह्मणो रूपे मूर्तञ्चैवामूर्तञ्चेत्युपक्रम्य नेति नेति, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्, नेदं यदिदमुपासते. अन्यदेव तद्विदितादथोऽविदितादधि, इत्यादिश्रुतीनां स्थूलत्वदृश्यत्वादिविशेषधर्म-निषेधिकानां, वागाद्यविषयत्वेन वृत्यविषयत्वेन च मूर्तामूर्तस्वरूपरहितत्वेन निषेध-मुखेनैव ब्रह्मप्रतिपादिकानां बाधप्रसंगात्। न चेष्टापत्तिः। उपासनाबोधकसविशेष-रूपकश्रुतिवन्निर्विशेषरूपाणां स्वरूपमात्रनिरूपणं विहायान्यप्रयोजनाभावात्। तस्मान्निषे

ध्यत्वेनैव सविशेषरूपाणि निरूपितानि, निषेध्यत्वञ्चाविद्याकल्पितत्वेनैवेति निर्विशेषमेव ब्रह्म श्रुतिप्रतिपाद्यमिति चेन्नैवम्, अनालोचितपूर्वाऽपरश्रुतिसारमेवं ब्रवीषि, नहि श्रुत्यक्षरदर्शनमात्रेण यथाकथञ्चित्स्वबुद्ध्यनुसारं श्रुत्यर्थकल्पनया कृतार्थता संपादनीया। तथासत्यनवस्थाप्रसंगात् बह्वनर्थप्रसंगाच्च। **अत एवोक्तम्** इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति। इति। तत्र निर्विशेषपरत्वे ज्ञाने क्षणादिकर्मताऽसंभवात्, ब्रह्मवेद ब्रह्मैव भवति, तस्मिन्दृष्टे परावरे, ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः, वेदैश्च सर्वैरहमेव वेद्यः, भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः, यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः। त एव पश्यंत्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजमित्यादि श्रुतिस्मृतिविरोधो दुष्परिहरः स्यात्। ननूक्तमविद्यासंबंधादेव दर्शनादिकर्मता ब्रह्मण इति चेन्न, पराञ्चि खानि व्यतृणदित्यनेनाविद्यासंबंधीन्द्रियाणामविषयत्वमुक्त्वा कश्चिदीश्वरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नित्यत्र धीरामृतत्वपदाभ्यामविद्यासंबंधरहितेन्द्रियविषयत्वबोधनात्। किञ्च का सा अविद्या यत्कल्पिता ब्रह्मनिष्ठा विशेषता। न तावज्जीवगताविद्या ब्रह्मनिष्ठविशेषकल्पने समर्था भवेत्, त्वन्मते यतो वाचो निवर्तन्तेऽप्राप्य मनसा सहेति श्रुत्या ब्रह्मणो मनोवचसोरविषयत्वेनाधिष्ठानज्ञानासंभवेन जीवकर्तृकल्पनासंभवात्। न हि कश्चिच्छुक्त्यादिरूपाधिष्ठानसामान्यज्ञानं विना शुक्तिरजतादिकल्पयति। अन्यथातिप्रसंगात्। नापि द्वितीयः ब्रह्मनिष्ठा)। तत्र तदभावात्। एकस्यैव ममांशस्य जीवस्यैव महामते। बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतर इतिवाक्यस्थैवकारद्वयेन ब्रह्मणि त्रैकालिकतदसंबंधबोधनाच्च। किञ्चाविद्याकृतविशेषकल्पनायां ब्रह्मणोदृश्यत्वम्, तेन चाधिष्ठानज्ञानोत्तरं तत्कल्पनमित्यन्योन्याश्रयस्य दुष्परिहारतयाऽपि नाविद्यकविशेषसिद्धिः। यच्चोक्तमुपासनादार्ढ्याय सविशेषनिरूपणन्नतुतत्र चरमतात्पर्यमिति तन्न, अब्रह्मणि ब्रह्मोपासनोदेशकस्य तव प्रतारकत्वापत्तेः। अथ योऽन्यां देवतामुपासते अन्योऽसावन्योऽहमस्मीति, न स वेद यथा पशुरेवं हि स देवानां पशुः, योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणेत्यादिश्रुत्याऽनात्मनः उपासनायाः निन्दितत्वाच्च। किञ्च सा सती असती सदसद्विलक्षणैव

वा नाद्यः। सत्त्वपक्षेऽनित्यत्वस्वीकारेऽपसिद्धान्तापातः। नित्यत्वे च ब्रह्मभिन्नत्वेऽद्वैतश्रुतिविरोधः, अभिन्नत्वेप्यभेदस्यभेदपूर्वकत्वनियमेन तदभ्युपगमापत्तिः। नापि द्वितीयः। असतः करणत्वासंभवेन ततः कस्यापि कार्यस्यानुत्पत्तौ सुतरां ब्रह्मधर्मानुत्पत्तिः। अस्तु तर्हि तृतीयः पक्षः इति चेन्न, एकतरनिषेधस्यापरपक्षस्थापकत्वनियमेन तदसंभवात्। तदुक्तं परस्परविरोधे हि न प्रकारान्तरस्थितिरिति। श्रुतिस्मृत्यादिप्रमाणाभावेनानादित्वमास्थायापि तत्समर्थनं गगनकमलिनीसौरभाघ्राणजन्यभाविसुखाशया साम्प्रतिकप्रमोदानुभववदेव तस्मान्नाविद्यकविशेषधर्मवद्ब्रह्म, किं तु स्वरूपभूतविशेषधर्मवदेवेति। **तथा हि** यथा सैन्धवघनोऽनन्तरोऽवाह्यः कृत्स्नो रसघनः एवं वा अरेऽयमात्माऽनन्तरोऽवाह्यः कृत्स्नः प्रज्ञान एव, सत्यं विज्ञानमानन्दंब्रह्म, आनन्दमयोऽभ्यासात्, दर्शनाच्च, **आनन्दमात्रकरपादमुखोदरादि.** इति श्रुतिसूत्रादिप्रमाणैः करादीनां सच्चिदानन्दरूपत्वेन स्वरूपातिरेकाभावत्वमेव, यच्चास्थूलादिपदैः स्थूलत्वादीनां प्रतिषेधः सोऽपिप्राकृतानामागन्तुकलौकिकधर्माणामेव न तु स्वाभाविकानामित्यवधेयम्। ब्रह्मधर्माणां स्वाभाविकानां निषेधासंभवात्। नहि अग्नेः प्रकाशनादिक्रियायाः निषेधः केनाप्युपायेन कर्तुं शक्यते। यच्च नेति नेतीत्यादिना मूर्तामूर्तोभयस्वरूपनिषेधादिकमुक्तं तदपि लोकप्रसिद्धधर्मनिषेधपरमेव यतस्तत्रेतिशब्दस्यप्रकारवाचित्वेन मूर्तामूर्तविभूतिरूपं पूर्वमवगतं तच्च ब्रह्मण एते रूपे इति नावगन्तव्यं किं तु ब्रह्मैवेति निषेधतात्पर्यम्। न तु ब्रह्मणः स्वरूपात्मकधर्मनिषेधिका श्रुतिः। इत्याशयेनैव व्यासपादेनापि प्रकृतैतावत्त्वं हि प्रतिषेधति ततोब्रवीति च भूयः इतिसूत्रमकारि।

ननु ब्रह्मधर्माणां स्वरूपात्मकत्वं न घटते, विकल्पासहत्वात्, तथा हि—ब्रह्मधर्माः ततो भिन्ना अभिन्ना वा। नाद्यः। तेषामपि नित्यत्वेनाद्वैतश्रुति व्याकोपात्। नापि द्वितीयः, धर्मत्वव्याघातात्। एवञ्च यथा कथञ्चित्प्रतिपादितब्रह्मधर्माणां प्रपञ्चसमानयोगक्षेमतया स्वतोनिर्धर्मकमेव ब्रह्मेति चेन्न, यथा सूर्यस्य तेजोरूपस्यालोकः स्वरूपात्मको धर्मस्तथा ब्रह्मधर्मा अपि इत्यदोषात्। तथा च एकमेवाद्वितीयम्, इति श्रुतिबलेन धर्माः स्वरूपभूताः, परास्य शक्तिर्विविधैव श्रूयते इत्यादौ षष्ठीविभक्त्या धर्माणां ब्रह्मभिन्नत्वमपि। किञ्च श्रुति प्रामाण्यादेव विरुद्धधर्माश्रयत्वमपिब्रह्मणः। तथा हि—आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः,

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, मनसैवानुद्रष्टव्यम् , तदेजति तन्नैजति अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः, अणोरणीयान्महतो महीयान् , समो नागेन समो मशकेन, अस्थूलमनण्वह्रस्वमदीर्घम् , अप्राणो ह्यमनाः शुभ्रः, असंगो ह्ययं पुरुषः, यः पृथिव्यां तिष्ठन्पृथिवीमन्तरो यमयति यं पृथिवी न वेद यस्य पृथिवी शरीरम् , निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं, साक्षी चेता केवलो निर्गुणश्च, विश्वतश्चक्षुरुतविश्वतो मुखो विश्वतोबाहुरुतविश्वतस्पात् । संबाहुभ्यां धमति संपतत्रैर्द्यावा भूमी जनयन्देव एकः, सर्वकामः सर्वरसः इत्यादिश्रुतयो दृश्यत्वादृश्यत्वादिविरुद्धधर्मवत्त्वं ब्रह्मणो गिरन्ति । तत्र जीवसामर्थ्येनादृश्यत्वमीशसामर्थ्येन च दृश्यत्वमिति न काचित्क्षतिः । अत एव मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् , नचशक्यसे द्रष्टुमनेनैव स्वचक्षुषा, दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरमित्यादिना गीतायामर्जुनं प्रति स्वसामर्थ्येनैव तादृशाचिन्त्यस्वरूपदर्शनयोग्यता भगवतैव संपादिता । किम्बहुना युधिष्ठिरदुर्योधनसन्धिकार्यार्थमागतश्रीकृष्णस्याज्ञानान्धदुर्योधनकुमन्त्रेण बन्धनविचारसमये जन्मान्धस्यापि धृतराष्ट्रस्य कृपापरवशेन भगवता स्वरूपदर्शनयोग्यदिव्यचक्षुः प्रदत्तम्. नान्येषामित्येककालावच्छेदेनापि दृश्यत्वमदृश्यत्वं चेत्यकामेन भवतापि स्वीकार्यं तर्हि किमु वक्तव्यं कालभेदेन कार्यभेदेनाधिकारि भेदेन भगवतो दृश्यत्वादृश्यत्वादिविषये । एवं विरुद्धक्रियावत्त्वादिकमपि परास्यशक्तिर्विविधैवश्रूयते, स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतेरवधारणीयमिति गुणादिमत्त्वेऽप्यप्राकृतगुणादिमत्त्वेनैव निर्गुणादिश्रुत्युपपत्तौ **सविशेषमेव ब्रह्मेति सिद्धम् ।**

## ब्रह्मशरीरस्याऽप्राकृत्वनिर्वचनम ।

अथैवं दृश्यगुणादिमच्छरीरस्य परिच्छिन्नत्वव्याप्त्येश्वरशरीरं परिच्छिन्नं शरीरत्वादस्मदादिशरीरवदित्यनुमानेनेश्वरस्य परिच्छिन्नत्वे सिद्धे, शरीरमनित्यं कार्यत्वादित्यनुमानेनानित्यत्वमपि स्यादिति चेन्मैवम् , पूर्वोक्तश्रुतिसूत्रस्मृतिभ्योऽन्यथानुपपत्तिवलेन च सिद्धयच्छरीरस्य यावतानुपपत्तिपरिहारस्तावत एव तत्सिद्धेः । ईश्वरशरीरमपरिच्छिन्नमप्राकृतत्वात् , स्वेच्छाधीनत्वात् , श्रुतिप्रामाण्याच्च । एवमीशशरीरं नित्यं सर्गाद्यकालीनकार्यारंभपूर्वकालीनत्वात् , अनागन्तुकधर्मवत्त्वाच्च

यन्नैवं तन्नैवं यथास्मदादिशरीरमित्यनुमानाभ्यां पूर्वोक्तानुमानद्वयस्य सत्प्रतिपक्षितत्वाच्च, किञ्च श्रुत्यैकसमधिगम्यब्रह्मणि न तर्कप्रसरसंभवः, नैषातर्केणमतिरपनेया, अचिन्त्याः खलु ये भावा न ताँस्तर्केण योजयेदित्यादिश्रुतिस्मृतिभ्यः। वस्तुतस्तु अनागन्तुकत्वेनैव ब्रह्मधर्माणां नित्यत्वश्रुत्या तथैव प्रतिपादनात्। तथा हि न तस्यकार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्यशक्तिर्विविधैव श्रूयते स्वभाविकी ज्ञानबलक्रिया च। अयमाशयः—ईशसंबन्धियत्किञ्चित्कार्यादिकं तत्सर्वमजन्यमेव, जीववत्स्वरूपातिरिक्तज्ञानक्रियादिषु करणमिन्द्रियादिकमपि नास्ति, आनन्दमात्रकरपादमुखोदरादित्वात्। शक्तयोऽपि विविधस्वरूपाः स्वरूपान्नातिरिच्यन्ते किं तर्हि स्वरूपभूता नित्या एव, तेनाचिन्त्यशक्तिमत्त्वमुक्तं भवति, ज्ञानक्रियादिशक्तिश्च स्वाभविक्येव नागन्तुकी स्वरूपातिरिक्ता च। किञ्च विश्वतश्चक्षुरुत विश्वतो मुखः, सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखमित्यादि श्रुतिस्मृतिप्रमाणबलेन विभुत्वमपीति, सिद्धं प्राकृतधर्मानधिकरणमनन्तथाचिन्त्याप्राकृतधर्मनिरूपिताधेयतानिरूपिताधिकरणताशालिसामानाधिकरण्यानधिकरणसकलधर्माधिकरणं स्वेच्छाधीनपरिच्छिन्नापरिच्छिन्ननित्यशुद्धमुक्तस्वरूपं सर्वभवनसमर्थं न्यायोपबृंहितसकलवेदान्तवेद्यमानन्दमात्रकरपादमुखोदरादिसच्चिदानन्दाकारं पुरुषोत्तमाख्यं परब्रह्मेति।

## ब्रह्मसम्बन्धविचारः

**अथास्य ब्रह्मणः** सम्बन्धानन्तरं गुरुमुखद्वारा शरणात्मनिवेदनमन्त्राभ्यां भगवत्कृपापात्रीभूत्वा तदनुग्रहेण जीवो मुच्यते नान्यथा उक्तञ्च सिद्धान्तरहस्यस्तोत्र आचार्यवर्यैः ब्रह्मसम्बन्धकरणात्सर्वेषां देहजीवयोः। सर्वदोषनिवृत्तिर्हि इति। तस्मात्सर्वात्मना नित्यं **श्री कृष्णः शरणं मम**। वदद्भिरेव सततं स्थेयमित्येव मे मतिरिति शरणमन्त्रपूतं शिष्यमाचार्य आत्मनिवेदनमन्त्रद्वारा भगवत्सन्निधिं कारयति। आचार्यं मां विजानियादितिवचनादाचार्योऽपि भगवत्स्वरूप एव, अत एव तद्द्वारा तत्प्रापणं सुलभं भवति। **सहस्रपरिवत्सरमितकालजातकृष्णवियोगजनिततापक्लेशानन्दतिरोभावोऽहं भगवते कृष्णाय देहेन्द्रियप्राणान्तःकरणानि तद्धर्मांश्च दारागारपुत्राप्तवित्तेहपराण्यात्मना सह समर्पयामि दासोऽहं कृष्ण तवास्मि**। इत्यात्मनिवेदनमन्त्रं स्वयमेव भगवानाचार्यायोपादिदेशेति संप्रदायप्रसिद्धिः

## पुष्टिपदार्थविचार:

अनेनप्रकारेण निवेदितात्मने भगवदनुग्रहः पुष्ट्यपरपर्यायोभवति अयमेव पुष्टिमार्गः, तदुक्तं-"समस्तविषयत्यागः सर्वभावेन यत्र हि। समर्पणं च देहादेः पुष्टिमार्गः स कथ्यते," उक्तञ्च भा. द्वि स्कंधे, पोषणं तदनुग्रह इति। न चैतत्पोषणं लौकिकं शरीरादेः किं तर्हि मोक्षसाधनमेव। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वामिति श्रुतेः। किञ्च शरीरादिपोषणस्यैव पुष्टिशब्दार्थत्वे-"त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनमि"ति संहितामंत्रस्थ पुष्टिशब्दस्यापि लौकिकार्थपरत्वे न्यूनत्वमपरिहार्यमतः पुष्टिशब्दार्थो भगवदनुग्रहात्मिका कृपैव। एतदनुग्रहेणैव भक्तहृत्कामले भक्तिरस उद्भवति येन प्रीतो भगवान्मुक्तिं ददाति। नायमात्मेति श्रुतेः, नद्दानं न तपो नेज्या न शौचं न व्रतानि च। प्रीयतेऽमलयाभक्त्या हरिरन्यद्विडम्बन'मि'ति भागवतोक्तेश्च। 'पुष्टिमार्गोऽनुग्रहैकसाध्यः प्रमाणमार्गाद्विलक्षण" इत्यणुभाष्योक्तेश्चेति।

## भक्तेरसत्वनिरुपणम्

नन्वस्तु पुष्टिमार्गस्य विलक्षणत्वं तथापि भक्तेः रसत्वं कथं वेदादिष्वश्रवणात्। न च स्नेह एव भक्तिरिति वाच्यम्, गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः। संबन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्यावयं विभो इति भा० दशमस्कंधीयनारदवाक्ये स्नेहभक्त्योर्भिन्नतया निर्देशादिति चेन्न, "भक्तिरस्यभजनं तदिहामुत्र फलभोगनैराश्येनास्मिन्मनःकल्पनमि"ति गोपालतपनीयश्रुत्युक्तमनःकल्पनस्य-माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः। स्नेहोभक्तिरितिप्रोक्तस्तया मुक्तिर्नचान्यथेति नारदपञ्चरात्रवचनात्, अथातो भक्तिजिज्ञासेति प्रतिज्ञानन्तरं 'सा परानुरक्तिरीश्वरे' इति शांडिल्यसूत्राच्च स्थायिभावस्नेहस्यैव मातुः पुत्रदर्शनादावभिव्यक्त्योत्कर्षेण च भक्तिरसत्वनिश्चयात्। अत एव तत्स्मरणादौ दुग्धस्रावो यथासंभवं व्यभिचारिणश्च तत्र तत्र प्रसिद्धा यथा-'यशोदाकर्ण्य नामानि कृष्णस्यचरितानि च। शृण्वन्त्यश्रूणिचास्राक्षीत्स्नेहस्नुतपयोधरा' इति। 'निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्। पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुका' इति कण्ठतोऽपि भक्तेरसत्वमुक्तं वेदितव्यम्।

## भक्त्यापरमुक्तिनिरुक्तिः ।

एवञ्च **भक्तेः रसत्वे सिद्धे** रसो वै सः इति श्रुतेर्भगवतोऽपि रसरूपत्वेन तादृशपरभक्तिमतामधिकारिभेदेन सायुज्यादिमुक्तिचतुष्टयमपि सुलभं भवति। अथास्तु भक्तेरसरूपत्वं तथापि न तया मुक्तिः किं तु ज्ञानेनैव, तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, ब्रह्मविद्ब्रह्मैव भवति, ऋते ज्ञानान्न मुक्तिः ज्ञानेनैव तु कैवल्यम्, सर्वंपाप्मानं तरति नैनं पाप्मा तरति य एवं वेदेत्यादि श्रुतिभ्यः साक्षाज्ज्ञानस्यैव मुक्तिफलकत्वमायाति सर्वत्र वकारश्रवणज्ञानोत्तरसाधननिराकरणाभ्याम्। यत्र क्वचिद्भक्तिलभ्यत्वंमुक्तेरुक्तं यथा भजति सोऽमृतो भवति भक्त्या मामभिजानाति इतिश्रुतिस्मृतिषु तदपि चित्तशुद्धिद्वारेणज्ञानसाधकतया परम्परयापि तत्साधकत्वेन तथोक्तिसंभवादिति चेन्मैवम्, ज्ञानस्याक्षरप्रापकत्वेनोपक्षयात्, अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यम्, एतद्वै तदक्षरं गार्गि अस्थूलमनणु इत्यादिश्रुतेः। पुरुषोत्तमप्राप्तिस्तु भक्त्यैकलभ्या, स च पुरुषोत्तमोऽक्षरात्परतरः। 'अक्षरात्परतः पर इति श्रुतेः, अक्षरादपि चोत्तम इति स्मृतेश्च, इत्थञ्च ज्ञानस्याक्षरप्राप्तिफलकत्वेऽपि 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' इति भगवद्वाक्यादक्षरस्य तद्धामत्वात्तत्प्राप्तिर्ज्ञानेन। प्रोक्तश्रुत्यादिसिद्धपरममुक्तिरूपपुरुषोत्तमप्राप्तिस्तु भक्त्यैवेति निर्गलितम्। किञ्च ब्रह्मभूत प्रसन्नात्मा न शोचति न कांक्षति। समः सर्वेषु भूतेषु मद्भक्तिंलभते परामिति भगवद्वाक्याद्ब्रह्मभावोत्तरं भक्तिर्भवतीति गम्यते। ब्रह्मभावश्चाक्षरज्ञानेनाविद्यानाशे सति भवतीति पुरुषोत्तमज्ञानव्यापारकभगवत्प्राप्तिरूपमुक्तिकरणभूताऽक्षरज्ञानस्य स्वरूपयोग्यतासंपादकत्वेन 'यदक्षरं वेदविदोवदन्ति' इत्यादिना स याति परमां गतिमित्यन्तेनाक्षरप्राप्त्युपायमुक्त्वा अनन्यचेताः सततमित्यादिना स्वाप्राप्त्युपायमात्मनस्तद्वैलक्षण्यनिरूपणपूर्वकञ्च भक्त्यैकलभ्यस्वस्वरूपप्रदर्शनात्प्राक् क्षराक्षरस्वरूपंनिरूपितमनन्तरञ्च यं प्राप्य न निवर्तन्ते तद्धाम परमं मम इत्यनेननाक्षरस्य ज्ञानमुक्तिसाधनत्वं स्वसाधनत्वञ्चोक्त्वा पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया इतिभक्तिलभ्यत्वं, परत्वं सर्वाधारत्वादिकं स्वयमेव भगवतावोचीतिपुरुषोत्तमप्राप्तिरेव परामुक्तिः सा च परमभक्त्यैवेति निश्चितम्। किञ्च पाप्पानं तरतीति

श्रुतेर्ज्ञानदशायां पापसत्ता प्रतीयते न तु भक्तिदशायां—'जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति कथनात् "मुक्तोपसृप्यव्यपदेशादि"ति सूत्राच्चाशेषपापविनशनपूर्वकं तादृशभक्तेरुद्भवत्वेन तया साक्षात्पुरुषोत्तमप्राप्तितया मुक्तिरिति स्थितिः। ननु 'दुःसहप्रेष्ठविरहतीव्रतापधुताशयाः। ध्यानप्राप्ताच्युताश्लेषनिर्वृत्याक्षीणमंगलाः' इत्यादिवचनेन भक्तिमार्गनिष्ठानां गोपीनां सुकृतदुष्कृतहानिज्ञापनात् भक्तौ सत्यां पापसत्ता न विद्यत इतिरिक्तं वचः पूर्वापरयोर्विरोधादिति चेन्न, ईशेच्छया विरोधाभावात्, तथा हि भगवताऽन्यासाम्रुत्कर्षज्ञापनाय तासु पापादेः स्थापनेन, भक्तेः पूर्वं पापनाशस्यौत्सर्गिकत्वेन चादोषात्। ननु नान्यः पन्था विद्यतेऽयनायेति श्रुतौ सकलेतरसाधनं व्यावर्त्य ज्ञानस्यपरैव मुक्तिः फलमुक्तं, "यमेवैष वृणुते तेन लभ्यः" इत्यत्रापि ज्ञानादिसकलसाधनानि निषिध्य स्वीयत्वेनांगीकारात्मकवरणेस्वात्मलाभरूपमोक्षः श्राव्यते। वरणञ्च भक्तिमार्ग एव भवतीति भक्तौ सत्यां मोक्ष इति ज्ञानभक्त्योः समुच्चयो विकल्पोवा भवतु नत्वेकतरस्यापकर्ष इतिचेदबोधविजृंभितमेतत्, मर्यादापुष्ट्याख्यभक्तिमार्गद्वयेन सर्वसमन्वयसंभवात् तथा हि—"एष एव साधु कर्मकारयति'-इत्यादिश्रुतेरनेनैतत्कारयित्वैतत्फलं दास्यामीति मार्गद्वयं विचारितवान् भगवान्, तत्र शास्त्रविहित ज्ञानभक्तिसाधनेन मुक्तिर्मर्यादा तद्रहितानामपि कृपया मुक्तिदानं पुष्टिरिति प्रादर्शिभगवतैव द्विधा भक्तिः—ज्ञानी त्वात्मैव मे मतम्, भक्त्या लभ्यस्त्वनन्ययेति वचनाभ्याम्। इत्थञ्च ज्ञानद्वारा तत्प्रवेशेनानन्दानुभवरूपा मुक्तिः पुष्टिरूपया केवलया तु भगवत्सामीप्योपलब्धिस्स्वतंत्रपुरुषार्थो भवति। एतेन मुमुक्षुभक्तापेक्षयानिरुपधिभक्तस्य गरीयस्त्वमुक्तं भवति. यद्यपि पुरुषोत्तम प्रवेशेप्यानन्दानुभवो भवत्येव तथापि 'भगवान्मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्' दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः इत्यादिवचननिचयैरनपेक्ष भक्तिलभ्यभगवत्स्वरूप लाभस्स्वतंत्रपुरुषार्थस्य वैशिष्ट्यमवसीयते। मर्यादाभक्तिसाध्यापि मुक्तिः 'चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेरिति' पञ्चपदीं जपन्नित्यनन्तरं ब्रह्मसंपद्यते' इत्यनेन च कीर्तनमात्रस्य मुक्तिसाधकत्वकथनात्प्रत्येकमितरनिरपेक्षैव मर्यादा भक्तिः मुक्तिंसाधयतीति स्थितिः। एवं 'परं ब्रह्मैतद्यो ध्यायति रमति भजति सोऽमृतो भवतीति गोपालतापनीयश्रुतेः पुराणोक्त नवधा भक्त्युपलक्षणत्वेन सर्वा भक्तयः स्वातन्त्र्येण मुक्तिसाधिका इत्यवगन्तव्यम्।

## मोक्षाऽवस्थानिर्वचनम् ।

अथ ब्रह्मविदाप्नोतिपरमिति श्रुत्या पुरुषोत्तमसंपत्तिरेव मुक्तिः सा च 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम् परमे व्योमन्सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इतिश्रुत्याऽक्षरज्ञानवतः तत्प्राप्तिरूपा। पुष्टिमार्गीयेभक्तिस्तु परमव्योमगुहानिहिताशेषकामभोगात्मिका। अथ ब्रह्मविद्ब्रह्मैव भवति तच्च यथेमाः नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति नामरूपे भिद्येते तासां समुद्र इत्येवप्रोच्यतएवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तिभिद्येते तासां नामरूपे पुरुष इत्येव प्रोच्यते सएषोऽकलोऽमृतो भवति यथोदकंशुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गोतम, तत्त्वमसि अहं. ब्रह्मास्मि इत्यादि श्रुतिभिरविभागेन ब्रह्मभवनस्य मुक्तित्वकथनात् सर्वकामोपभोगश्च भोग्यभोक्तृभोगोपकरणशरीरादिविभागसाध्यो न परमुक्तिरूपः किंतु सगुणब्रह्मप्राप्तिविषयः, तत्तल्लोकभोगप्राप्तिविषयो वेति चेन्नैवम् अविभागलयस्याक्षरज्ञानवतः पुरुषोत्तमप्राप्त्या सर्वकामोपभोगस्योक्तत्वेन सर्वसमन्वयसंभवात्। सोऽश्नुते सर्वान्कामान्ब्रह्मणा सह विपश्चिता। अन्यथा–मुक्तस्य ब्रह्मसमशनकथनं न ब्रह्मणश्च सहिविश्वकृतसहिविश्वस्य कर्तेत्यादिकमारभ्य सर्वस्याधिपतिः सर्वमिदंप्रशास्तीत्यादिभिः सर्वकर्तृत्वादिधर्मवत्त्वेन ब्रह्मणो विहरणात्ब्रह्मीभूतजीवस्यापि तादृशत्वकथनविरोधध्रौव्यात्। एतेन मोक्षस्य निःसंबोधतापि पराकृता "जक्षन् क्रीडन् रममाणः सोऽश्नुते सर्वान्कामानि"त्यादिश्रुत्युक्तनित्यलीलास्थमुक्तजीवस्य ब्रह्मणा सह परमानन्दसन्दोहानुभवस्य सर्वकामोपभोगस्य च निःसम्बोधमोक्षाभ्युपगमे समन्वयासंभवात्। एतदुक्तंभवति यमेवैषवृणुते तेन लभ्य इति श्रुतेः भगवत्संकल्पलब्धभजनसाधनभूतचिन्मात्रं सत्त्वज्ञानानन्दात्मकब्राह्मशरीरेण वा मुक्तोऽनन्याधिपतिर्जीवः। ब्रह्मविदाप्नोति परमिति ब्रह्मविद्ब्रह्मैव भवतीत्यादिश्रुत्याविशेषसाम्यश्रवणेऽपि सोऽश्नुते सर्वान्कामानिति श्रुत्या प्राप्तसायुज्यभक्तस्य सर्वकामोपभोगमात्रसाम्यसंपादनेन ससर्वस्याधिपतिः सर्वस्येशान इति श्रुत्युक्तसर्वकर्तृत्वादिरूपसर्वाधिपत्यस्य परमेश्वरनिष्ठत्वेन न पूर्वापरश्रुतिविरोधो, नीत्यलीलास्थमुक्तजीवस्य सर्वकामोपभोगो निरतिशयानन्दानुभवश्चेति सर्वमनवद्यम् ॥

॥ इति श्री सर्ववेदान्तसारसंग्रहे शुद्धाद्वैतसिद्धान्तसंग्रहो नाम चतुर्थःस्तवकः ॥ ४ ॥

## अथ विशिष्टाद्वैतदर्शनसारसंग्रहः ॥

### चिदचिदीश्वरतत्त्वदिग्दर्शनम् ।

अथ विविधविचित्रचराचरजगद्व्याख्यानमेकेनैव पूर्णंचेदेकमेव, द्वाभ्यांचेत्तद्वयं त्रिभिश्चेत्तत्त्रयम् मन्तव्यम् । ऋते कर्तृकरणोपादानेभ्यो न कदाचित्किञ्चिन्निर्मितं निर्मिमाणम्वा दृष्टं, दृश्यते च मृत्तिकामुपादाय कस्यचिद्भोगाय कुंभकारादीनां घटादिरचनेति परमेश्वरोऽपि प्रकृत्या जीवहितार्थं जगद्रचयत्येवञ्च भोक्तृभोग्यनियामकभेदेन चिदचिदीश्वररूपेण व्यवस्थितास्त्रयः पदार्थाः। तदुक्तम्– 'ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः । ईश्वरश्चित इत्युक्तो जीवो दृश्यमचित्पुनः' इति। यद्यप्येक एव ईशः कर्तुमकर्तुमन्यथाकर्तुं समर्थोलीलयैव जगद्रचने समर्थस्तथापि केनोपकरणेन कस्मैप्रयोजनाय वा रचयेत्प्रयोजनं विना प्रवृत्त्यभावादेकाकिनो लीलाभावात् 'स एकाकी न रमते' इति श्रुतेः । अथ प्रकृति जीवाभ्यामेव जगद्व्याख्यानसंभवे परमेश स्वीकारे प्रयोजनाभाव इति चेन्न परिवर्तनशीलप्रकृतेः नियामकादृते व्यक्तेरसंभवात् । वैषम्याभावप्रसंगात् । शतशः श्रुतिबाधगच्च। यत्तु कर्मण एव वैषम्यसंपादनं श्रुतेरन्यपरत्वञ्चेति तत्तुच्छम्, चेतनं कर्मफलमुत्पादये दचेतनम्वा, नाद्यः, क्रियात्मकत्वेन प्रतिक्षणमुत्पादविनाशिनः कर्मणश्चेतनत्वासंभवात् स्वस्य स्वफलोत्पादकत्वासंभवाच्च । न द्वितीयः । अचेतनस्य कर्मगश्च कर्तृत्वासंभवात् । संभवे च लेखनक्रियापि लेखिका स्यात् । श्रुतेरन्यपरत्वे संदर्भविरोधापत्तेश्च । नियामकं विनापिकार्यं स्यात्तदा स्यादेव न स्यादेव वा, न तु कदाचित्स्यात् । न च विकशासंकोचस्वभावा एव परमाणवोवसन्तादिसाहाय्येन मालत्यादिविकाशादिवत्समये संयुज्यन्ते समये च वियुज्यन्ते इति वाच्यम्, एकस्य विरुद्धधर्मद्वयस्वभावासंभवात् । तस्मादचिन्त्यशक्तिसंपन्ननिरस्तसमस्तदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः परमेश्वर एव तन्नियमने समर्थः। एवं शरीरसंचालकत्वेन विविधकर्मफलभोक्तृत्वेन च जीवात्मनोऽपि सिद्धिः । न च यन्त्रवत्स्वयमेव चलिष्यति किं तेनेति वाच्यम्, सञ्चालकं विना तदचलनात्, नचेश्वर एव संचालकोऽवरोधकश्चेतिवाच्यम्, तदा सुखदुःखादिफलभोक्तृत्वमपि तस्यैवस्यात् । न चेष्टापत्तिः, तत्प्रयोजकपापपुण्याभावादीश्वर इति शरीरा-

दिवैविध्यासिद्धा'' संसारोच्छेदापत्तेः। अणुत्वे सति चेतनत्वं जीवलक्षणम्। परमाणु व्यावृत्तये विशेष्यदलम्, ईश्वरव्यावृत्यर्थं विशेषणदलम्। इत्थञ्च श्रुत्या चिदचिच्छरीरप्रकारकेश्वरस्यैव जगत्कर्तृत्वादिकमिति तत्त्वत्रयमेव वेदान्तविद्भिरवगन्तव्यम्।

## (चित्) जीवतत्त्वनिरूपणम्

तत्राणुत्वे सति चेतनत्वादिलक्षणलक्षितज्ञानादिधर्मवन्तश्च जीवात्मानः परमात्मनो भिन्नाः तदंशभूता नित्या अणवश्च 'ऋतं पिबन्तौ सुकृतस्यलोके द्वा सुपर्णासयुजा सखाया, ज्ञाज्ञौ द्वावीशानीशौ, पृथगात्मानं प्रेरितारं च मत्वा, अजोह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्यः न जायते म्रियते वा कदाचित, अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे, बालाग्रशतभागस्य शतधा कल्पितस्य च, जीवो भागः स विज्ञेयः, आराग्रमात्रः पुरुष एषोणुरात्मा चेतसा वेदितव्यः, पादोऽस्य सर्वा भूतानि, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, अंशो नाना व्यपदेशात्, उत्क्रांतिगत्यागतिभ्यः ममैवांशो जीवलोके जीवभूतः सनातनः, इत्यादिश्रुति सूत्रस्मृतिभ्यः। बद्धमुक्तादिभेदभिन्ना अनन्तास्ते च भेदाभेदनिरुपणावसरे निरुपिता अत्राप्यनुसंध्येया विशेष जिज्ञासुभिः। विस्तरभियात्रोपरम्यते। अहमिति प्रत्यक्षेण, अत्रायं पुरुषः स्वयं ज्योतिः, मत्वा धीरो न शोचतीत्यादिश्रुत्या च स्वयं प्रकाशत्वमपिजीवस्य ''योगाभ्यासभुवास्पष्टम् प्रत्यक्षेणप्रकाश्यत'' इत्युक्तेश्च। अणुत्वेऽपि चैकदेशस्थित हरिचंदनादिवत्सकलदेहव्यापि आनंदजनकत्ववत्, द्युमणिप्रभृतीनामेकत्रस्थितानां सर्वत्रालोकवच्चहृदिस्थितानामात्मनां सकलदेहव्यापि ज्ञानधर्मेणैककालावच्छेदेन प्रत्येकं स्वस्वशरीरावच्छिन्नशिरः पादादिनिष्ठसुखदुःखाद्यनुभवोपपत्तौ परोक्तव्यापकत्वं जीवात्मनां प्रमाणाभावादश्रद्धेयमेवेति।

## अचित्पदार्थ निरुक्तिः

अवस्थाश्रयामिश्रसत्त्वरहिता 'गौरनाद्यन्तवती जनित्री भूतभाविनीति श्रुति सिद्धाचिच्छब्दवाच्या जडात्मिका दृश्यभूता प्रकृतिरपि भोग्यभोगोपकरणभोगायतनभेदात् त्रिधा। तत्र भोग्या विषयाः भोगोपकरणमिन्द्रियाणि। भोगायतनानि चतुर्दशभुवनानि तेषां स्वरूपं प्रपञ्चयिष्यते। अस्यामेव गुणत्रयाश्रय भूतायां

प्रकृतौ भगवत्संकल्पाधीनगुणवैषम्यान्महदादिक्रमेण सात्विकराजसतामससूक्ष्म-स्थूलभूतभौतिकजगत्सृष्टिर्भवति ।

## ईश्वरस्वरुप दिग्दर्शनम् ।

भोक्तृभोग्यरूपयोरेतयोरुभयोश्चिदचितोरन्तर्यामिरूपेण नियामकापरिच्छिन्ना-नन्तज्ञानैश्वर्यवीर्यशक्ति संपन्नसर्वातिशयासंख्येयकल्याण गुणगणस्वसंकल्पप्रवृत्तसमस्त-चिदचिदात्मकबहुभवनसमर्थनिरतिशयदिव्यभूषण भूषितत्रिविधपरिच्छेदरहित सर्वगतः पुरुषोत्तमादिपदाभिधेयसच्चिदानन्दस्वरूपे तस्मिन्नीश्वरे अचितः सत्वँश्चितश्च सत्त्वचित्त्वेऽन्तर्भूतानीति चिदचिद्विशिष्टाद्वैतं ब्रह्मैव निमित्तोपादानसहकारितया जग-दाकारेण बहुधा भवति ।

## ईश्वरस्यत्रिविधकारणत्व प्रदर्शनम् ।

एतदुक्तं भवति सूक्ष्मचिदचिद्विशिष्टवेषेण जगदुपादानम् , संकल्पविशिष्टवेशेण निमित्तम् , कालाद्यन्तर्यामि वेषेण सहकारिकारणं च भवति । उपादान निमित्त-सहकारिभेदेनकारणं त्रिविधम् । तत्र कार्यरूपेण विकारयोग्यं वस्तूपादानम् । यथा घटं प्रति मृद्, कटककुंडलादिकं प्रति च हाटकम् । अस्यैवोपादानस्य कार्यत्वेन परिणामयितृकर्तैव निमित्तकारणमुच्यते । यथा घटं प्रति कुलालः, कटकादिकं प्रति सुवर्णकारादयः । कार्योत्पादोपकरणं सहकारिकारणम् । यथा दंड चक्र संचायकादयः । जगतस्तु त्रिविधं कारणं नारायणपदवाच्ये ईश्वर एव । नारायणाज्जगत्सर्वं प्रजायते इति श्रुतेः । तत्र तस्माद्वा एतस्मादात्मनः आकाशः संभूत इत्यादिश्रुतिवलात्सूक्ष्मचिदचिद्विशिष्ट उपादानम् । एकोहं बहु स्यामितिसंकपविशिष्टो निमित्तम् । ज्ञानशक्त्यादिविशिष्टः सहकारीत्यखिलजगतस्त्रि-विधकारणत्वं भगवतो नारायणस्यैव संगच्छते ।

## ब्रह्मणोजगदुपादानत्वनिरूपणम् ।

अथ श्रुति स्मृति विरोधादिदमसंगतम् । तथाहि निष्फलं निष्क्रियं शांतं निरवद्यं निरंजनम् । 'स वा एष महानात्माऽजरोऽमृतः' विकारजननीमज्ञामदष्ट-रूपामजां ध्रुवाम् । ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः । सूयते पुरुषार्थाश्च तेनैवाधिष्ठिता जगत् । गौरनाद्यनन्तवती जनित्री भूतभाविनी । 'अस्मान्मायी

सृजते विश्वमेतत्। 'मायां' तु प्रकृतिं विद्यान्मायीनं तु महेश्वरम्' मयाध्यक्षेण प्रकृतिः सूयते सचरामितीश्वराधिष्ठितप्रकृतेरेव जगदुपादानत्वम्। लोकेऽपि प्रकृतभूतमृत्सुवर्णादेः घटशरावोदञ्चनकटककुंडलांगदाद्युपादानत्वस्याचेतनस्य। चेतनस्य च कुंभस्वर्णकारादेर्निमितत्त्वमस्य दर्शनादभिन्ननिमित्तोपादानत्वंल्लोकवेदविरुद्धत्वादश्रद्धेयमिति चेन्न। उदुंबरकीटवदल्पदृष्टेस्तवेदृशप्रलपनपरिहाराय गुरव उपासनीयाः, श्रुतिपयोधिनिमज्जनासादितार्थरत्नसारसूक्ष्मदृष्टेरेवं पूर्वापरासंबद्धप्रलापासंभवात्। तथा हि निमित्तोपादानयोर्भिन्नत्वे-उततमादेशमप्राक्ष्योयेनाश्रुतं श्रुतं भवत्ययमतं मतमविज्ञातं विज्ञातं कथं स भगव आदेशो भवति, यथा 'सौम्यैकेन मृत्पिण्डेन सर्वंमृन्मयं विज्ञातं स्यादित्यादिजगत्कारणप्रश्नप्रतिवचनपरश्रुतीनां बाध प्रसंगात, यदिनिमित्तकारणविज्ञानात्समस्तं जगद्विज्ञातं स्यात् तदा कुलालादिविज्ञानेनापि घटशरावोदञ्चनादिविज्ञानम्, न च तथा दृश्यते। किन्तूपादानभूतमृद्ज्ञानेनैव घटादिविज्ञानमिति ब्रह्मणोऽप्युपादानत्व एवनिखिलजगद्विज्ञानसंभवः। सोऽकामयत, एकोहं बहु स्यां प्रजायेय, तदैक्षत बहु स्यां प्रजायेयेति ब्रह्मण एव संकल्पपूर्वकबहुभवनसृष्टिराम्नायते। कर्तारमीशं पुरुषं ब्रह्मयं निम्' तद्भूतयोनिं परिपश्यन्ति धीराः 'इत्यादिश्रुतिषु योनिशब्दोपादानादपिचं पादानत्वमपि तस्यैव। एतेन श्रुत्या निमित्तोपादानयोर्भेदः प्रतीयत इति निरस्तम्। यच्च गौरनाद्यनन्तवर्तीत्यादिभिः प्रकृतेरुपादानत्वमुक्तं तत्रापि अविभक्तनामरूपेण कारणावस्थब्रह्मण एव प्रकृतिशब्देनाभिधाने तात्पर्यम्। सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद, सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्वं यदिदं किंचेत्यादिश्रुतिभ्यः ब्रह्मेतरवस्त्वन्तराभावसूचनात्। विभक्तनामरूपात्मकं च ब्रह्म विविधकार्यत्वेनोच्यते।

## चिदचितोः ब्रह्मशरीरत्वोपपत्तिः।

अयमभिप्रायः- चिदचिद्ब्रह्मणः शरीरतया प्रकारः तथोक्तं यः पृथिव्यां तिष्ठन्पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरम् यः पृथिवीमंतरो यमयति एष त आत्मा अंतर्याम्यमृत इत आरभ्य य आत्मनि तिष्ठन्नात्मनोन्तरः यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति एष त आत्मान्तर्याम्यमृत इत्यन्तं बृहदारण्यके, आस्थूलभूतपृथिव्याद्यात्मभ्यो ब्रह्मशरीरत्वेन प्रतिपाद्य सुबालोपनिषदि च बुद्धिमारभ्य मृत्युशब्दवाच्यतमः पर्यन्तं

ब्रह्मशरीरतया ब्रह्मणश्च तदात्मकत्वमुक्तम्। एवञ्च सूक्ष्मचिदचिद्विशिष्टब्रह्मैव विभक्तनामचिदचिन्मिश्रप्रपञ्चशरीरं स्यामिति संकल्प्य प्रकृति पुरुषमहदहंकारतन्मात्रभूतेन्द्रिय चतुर्दशभुवनात्मकब्रह्मांडतदन्तर्वर्तिदेवतिर्यङ्मनुष्यस्थावरादितदुपभोग्यनानाविध विषयभोगोपकरणेन्द्रियादि सर्व प्रकार संस्थानविशेषकार्यरूपजगच्छरीरतया ब्रह्माण्डाकारेणात्मानं परिणमयतीति।

## ब्रह्माण्डस्वरूपवर्णनम्।

ब्रह्माण्डञ्च जीवेश्वरभोगस्थानं कन्दुकाकारं प्राकृतद्रव्यम्। तत्र पद्माकाराभूः कर्णिकाकारो मेरुः। मेरोर्दक्षिणतो भारत किंपुरुष हरिवर्षाणि त्रीणि। उत्तरतो रम्यकहिरण्मय कुरुवर्षाणि त्रीणि। पुरतो भद्राश्ववर्षम्। पाश्चात्केतुमाल्यं वर्षम्। मध्ये इलावृतम्। इत्थं नववर्षयुतं जंबूद्वीपं, लक्षयोजनविस्तीर्णं समपरिमाणेन लवणसागरेणावृतम्। लवणसागरश्च द्विगुणेन सप्तवर्षात्मकेन प्लक्षद्वीपेनावृतः। सोऽपीक्षुसमुद्रेण। सचाब्धिः शाल्मलीद्वीपेन। सोऽपिसुरासमुद्रेण। स कुशद्वीपेन। स च सर्पिःसमुद्रेण। स क्रौंचद्वीपेन। सोऽपि दध्यर्णवेन। स च शाकद्वीपेन। सोपि क्षीरार्णवेन वेष्टितः। स वर्षद्वयविभाजकवलयाकार मानसोत्तर पर्वतसहितेन पुष्करद्वीपेन। स शुद्धजलधिना। एतेषामुत्तरोत्तर द्वैगुण्यं बोध्यम्। प्लक्षद्वीपादिपञ्चसप्तवर्षात्मकाः सप्तद्वीपात्मका द्विगुणीकृतकाञ्चनभूम्यावृताः। काञ्चनभूमिश्च लोकालोकपर्वतेन। स चान्धतमसा तच्च गर्भोदकेन। तदण्डकटाहेन। भूमेरधस्तादतलवितलरसातलतलातलातलमहातलसुतलपातालात्मकसप्तलोका अधो रौरवाद्येकविंशतिभेदभिन्नाः पापभोगभूमयो नारकाः। ततस्तमः। ततो गर्भोदकम्। ततश्चांण्डकटाहः। एवं भूमेरुपरि च लक्षयोजनात्सूर्यमण्डलम् भुवर्लोकः। ततश्चन्द्रमंडलम्। तदुपरिमक्षत्रबुधभौमगुरुशुक्रशनि सप्तर्षिमंडलानि सन्ति। तस्मादुपरि ध्रुवः। अयञ्च स्वर्लोकः। ततश्चतुर्लक्षादुपरि कोटियोजनविस्तीर्णो महर्लोकः। तद्द्विगुणो जनलोकः। तस्माच्चतुर्गुणस्तपोलोकः ततो द्वादशकोट्युच्छ्रायः सत्यलोकः। ततस्तमः। ततो गर्भोदकम्। ततोऽण्डकटाहश्च। तदण्डं दशोत्तरावरणावृतमेतादृशादनताण्डानि जलबुद्बुदवद्युगपदीश्वरसृष्टान्येतत्सर्वं विष्णुपुराणादिषु सविस्तरं द्रष्टव्यं जिज्ञासुभिरिति।

## जगदाकारपरिणतेऽपि ब्रह्मणि दोषाद्यसङ्गत्वनिरूक्तिः।

अथाप्तकामोपीश्वरो राज्ञामाखेटवल्लीलयैवाचिन्त्यवैचित्र्यब्रह्माण्डाकारेण स्वयमेव परिणमय्य संजिहीर्षावशात्स्वात्मन्येवाप्याययति च। 'पृथिव्यप्सु प्रलीयते' इत्यारभ्य तमः परेदेवे एकीभवतीत्यन्तश्रुतेः। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयत्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म, अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि, तत्सृष्ट्वा तदेवानुप्राविशदित्यादिश्रुतिभ्यश्च। एवंविधजगत्सर्जनेऽपि न तद्गतेनदोषेणाणुमात्रेणापि संश्लेषोभवति तस्य। परमात्मभूतचिदंशगताः सर्व एव पुरुषार्थाः। तदात्मभूताचिदंशगताः सर्वे विकाराश्च भवन्ति। परमात्मात्वपरिच्छिन्नज्ञानानन्दमयः स्वैदैकस्वरूपो जगत्परिवर्तनलीलयावतिष्ठते। 'एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः। एष एवानन्दयाति, सच्च त्यच्चाभवत्, निरुक्तञ्चानिरुक्तञ्च, निलयनञ्चानिलयनञ्च, विज्ञानञ्चाविज्ञानञ्च, सत्यञ्चानृतञ्च सर्वमभवदित्यादिश्रुतिभ्यो विचित्र चिदचिद्रूपेण विक्रियमाणत्वेऽपि ब्रह्मणो निरस्तसमस्तदोषगन्धापरिच्छिन्नज्ञानन्दैकस्वभावागमात्।

## शुद्धाऽद्वैतिप्रक्रियाखण्डनम्।

अथैकोहं बहुस्याम्, आत्मा वा इदमग्र आसीत्, आत्मैवेदमग्र आसीदित्यादिश्रुत्या ब्रह्मव्यतिरेकवस्तुनोऽभावज्ञापनादाविर्भावतिरोभावब्रह्मात्मकशक्त्यैव-सकलेष्टसिद्धिसंभवे त्वदुक्तसूक्ष्मचिदचिद्विशिष्टत्वेनोपादानत्वादिकथनमसंगतमेवेतिचेच्छृणु–यत्किञ्चिच्छ्रुतिखंडमादाय सर्वसमर्थनप्रवृत्तस्यतवार्धवैनाशिकत्वप्रसंगपातात्। यदि श्रुतिबलेनैव शुद्धब्रह्मणः सर्वभवनकथने प्रवृत्तस्तदा तद्बलेनैव चिदचितोरपि सत्वमनुजानीहि–उक्तञ्च अजामेकां लोहितशुक्लकृष्णां। गौरनाद्यन्तवतीत्यादिनाचितः। द्वा सुपर्णेत्यादिना चितश्च सत्त्वमिति। आत्मैवेदमग्रइत्यादावपि कारणावस्थायां ब्रह्मरूपेणावस्थानं सर्वं कथ्यते, तथासतीदमग्रशब्दयोरसमूवद्धप्रलापप्रसंगात्। असद्वस्तुन्यासीच्छब्दायोगात्। श्रुतिसिद्धवस्त्वपलापिनस्त्वद्वचस्यन्येषामनाश्वासाच्च

## भेदाऽभेदप्रकारखण्डनम्।

नन्वस्तु चिदचितोः पृथक् सत्ता तयोः ब्रह्मणैकान्तिकाभेदस्तु न श्रुतिसंमतः तथा हि–अयमात्मा ब्रह्म, तत्त्वमसि, अहं ब्रह्मास्मि नान्योऽतोस्ति द्रष्टा,

ब्रह्मेमे द्यावा पृथिवीत्यादिश्रुतिभिरभेदश्रवणात्। ज्ञाज्ञौ द्वावीशानीशौ, ऋतं पिबन्तौ सुकृतस्य लोके, द्वा सुपर्णा सयुजा सखाया, प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याति, तमेव विदित्वातिमृत्युमेति, आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः इत्यादिभिर्भेदश्रवणाच्चोभयविधश्रुतीनां परस्परं बाध्यबाधकभावाभावेन भेदाभेद एव पारमार्थिको नत्वदुक्तचिदचिद्विशिष्टाभेद एवेति चेन्मैवम्, अनाद्यविद्यामूलकत्वे नैव भेददर्शनोपपत्तेः मोक्षदशायां भेददर्शननिषेधेन ब्रह्मस्वरूपापत्तिव्यपदेशाच्चाभेदस्यैव स्वाभाविकत्वोपपत्तेरन्यथा 'ब्रह्म वेद ब्रह्मैव भवति, यत्र हि द्वैतमिव भवति तत्र इतर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्, यस्मिन्सर्वाणिभूतान्यात्मैवाभूद्विजानतः तत्र को मोहः कः शोक एकत्वमनुपश्यतः, सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेत्यादिश्रुतीनां बाधप्रसंगात्। नचसोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चितेति सहात्मकश्रुतिर्मोक्षदशायामपि भेदं प्रतिपादयतीति वाच्यम्, तत्र सर्वैः कामैः सह सर्वगुणान्वितं ब्रह्माश्नुते इत्यर्थः 'नान्योऽतोऽस्ति द्रष्टेत्यादिसर्वविधभेदनिषेधकश्रुतिबलादवगम्यते। अन्यथासहब्रह्मणेति सहयोगे ब्रह्मणोऽप्राधान्यं प्रसज्येत। तथा च पाणिनिसूत्रम् **"सहयुक्तेऽप्रधाने"** इति। तस्माद्बलवदभेदशास्त्र बाधभिया भेदस्याविद्यामूलकत्वमभेदस्य स्वाभाविकत्वेन पारमार्थिकत्वमवगन्तव्यमिति सत्यायाः प्रकृतेः सत्यस्यपुरुषस्य, एवं सत्यकामसत्यसंकल्प चिदचित्प्रकारब्रह्म परिणामसत्यभूतसूक्ष्मस्थूलभूतभौतिकचराचरजगतामपिब्रह्म स्वरूपत्वेन चिदचिद्विशिष्टाद्वैतं ब्रह्मैवतत्त्वमिति स्थितिः एष सर्वेषुभूतेषु गूढात्मा न प्रकाशते। दृश्यते त्वग्रयाबुध्या सूक्ष्मया सूक्ष्मदर्शिभिः। नान्योतोस्तिद्रष्टा नान्योतोस्ति श्रोतेत्यादिः' अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम्। सर्वस्य चाहं हृदिसन्निविष्टः ईश्वरः सर्वभूतानां हृद्देशेर्जुनतिष्ठति। भ्रामयन्सर्व भूतानि यंत्रारूढानि मायया। भूमिरापोनलोवायुः खं मनोबुद्धिरेव च। अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतांमहाबाहो ययेदं धार्यते जगत्। एतद्योनीनि भूतानि सर्वाणीत्युपधारय। अहं कृत्स्नस्यजगतः प्रभवः प्रलयस्तथा। मत्तः परतरंनान्यत्किञ्चिदस्तिधनंजय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणाइव। व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च। प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि। परमात्मा च सर्वेषामाधारः पुरुषोत्तमः। विष्णुनामा स वेदेषु वेदान्तेषु च

गीयते इत्यादिश्रुतिस्मृतिपुराणादिभ्य इति ।

## अविद्याखण्डनोपक्रमे पूर्वपक्षः ।

अथैवं त्वयापि भेदप्रतिपादकश्रुतीनामौपाधिकपरत्वस्वीकारेऽशेषज्ञातृत्वकर्तृत्वादिसजातीयविजातीयस्वगतसमस्तविशेषरहितचिन्मात्रं ब्रह्मैव परमार्थः इत्यायाति । तदन्यदविद्याविलासविलसितं ब्रह्मज्ञानबाध्यम्, परमार्थब्रह्मणश्च श्रुतिप्रतिपादितापहतपाप्मत्वेन सकलकर्मबंधरहितत्वेन च ज्ञानानन्दादि स्वरूपत्वेऽपि अनाद्यनिर्वचनीयाविद्यातिरोहितस्वरूपत्वेनबद्धत्वं भवति । तत्त्वमसि, सदेवेतिसामानाधिकरण्यपरवचननिचयप्रामाण्यात्तस्मिन्नविद्याकल्पितसकलभेदप्रपञ्चस्य निर्विशेषब्रह्मात्मैकत्वविद्ययानाद्यविद्यानिवृत्तिपूर्वकनिवर्तनेन मुक्तत्वञ्चेति चेन्नैवम् सकलप्रमाणविरयत्वेनाविद्यायां प्रमाणाभावात् ।

## अविद्यायां प्रत्यक्षप्रमाण खण्डनम ।

नन्वहमज्ञस्त्वदुक्तमर्थं न जानामीत्यादिसामान्यविशेषप्रत्यक्षसिद्धानादिभावरूपं ज्ञाननिवर्त्यमज्ञानमेव सा । विशेष्यांशानुपादाने आत्मन्यतिव्याप्तिः, तन्मात्रोक्तौ च ज्ञाननिवर्त्यपूर्वज्ञानेच्छादावतिव्याप्तिः, भावत्वानुक्तौ च ज्ञानप्रागभावे चातिव्याप्तिः स्यादिति । अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वमित्येव लक्षणंसमीचीनम् । एवञ्च रूप्योपादानाज्ञानस्याप्यनादिचैतन्याश्रितत्वादनादित्वेन सादिशुक्त्यवच्छिन्नचैतन्यावरणाज्ञानेऽपिनाव्याप्तिः सादिशुक्त्यादेरूक्ताज्ञानाधिष्ठानतावच्छेदकत्वात् । न च तस्याः भावरूपत्वेऽभावोपादानाज्ञाने जगदपि ब्रह्मोपादानकं स्यादिति वाच्यम्, यत्किञ्चित्साजात्यस्य तत्रापि संभवात् सर्वथा साजात्यस्यैवोपादानोपादेयभावनियामकत्वे तन्तुपटयोरपि तथा नियमो न स्यात्तत्रापि तन्तुत्वपटत्वरूपवैजात्यस्य विद्यमानत्वात्, यत्किञ्चित्साजात्यस्य तत्रापिसंभवाच्च ।

## अविद्यायाः भावरूपत्वखण्डनम् ।

ननुकथमिदं भावरूपमज्ञानम्, अघटं भूतलमित्यस्य घटो नास्तीति प्रत्ययादिवाहमज्ञ इत्यस्यापि मयि ज्ञानं नास्तीति ज्ञानाभावविषयाद्विशेष्यविशेषणभावव्यत्ययातिरिक्तविशेषो नास्ति, तथाहि-घटाभावविषया द्विधा प्रतीतिः,

एकतोऽघटं भूतलमित्याकारिका तस्या घटाभाववद्भूतलमितिविषयो भवति। अन्या च भूतले घटोनास्तीत्याकारिका, तस्या भूतलाधिकरणघटनिष्ठप्रतियोगिता निरूपकोऽभाव इत्यर्थो भवति फलतः घटाभावो भूतलञ्चोभयत्र विषयः समः, अभावेकेवलं प्रथमप्रतीतिः घटाभावप्रकारकभूतल–विशेष्यिका, द्वितीया च घटाभाव· विशेष्यकभूतलप्रकारिका भवति, एवं प्रकृतेऽपिज्ञेयम् तथा चोभयत्रविषयकृत· विशेषाऽभावेनेच्छाद्वेषाभावज्ञानयोरिवाभावालंबनैवाहमज्ञइत्यादिप्रतीतिरिति चेन्मैवम्, घटाभाववद्भूतलमितिज्ञानं प्रति घटत्वावच्छिन्नघटज्ञानं भूतलज्ञान ञ्चकारणम् तथा सति मयि ज्ञानं नास्तीत्यत्रापि ज्ञानत्वावच्छिन्नज्ञानविषयकज्ञानस्य, अस्मत्पदार्थज्ञानस्य च करणत्वेन ज्ञानत्वावच्छिन्नज्ञानप्रतियोगिकाभावविषयक- ज्ञानमुपपन्नं न स्यात्। तथाहि–ज्ञानसामान्याभावविषयकज्ञानस्थले प्रतियोगि रूपज्ञान विषयक ज्ञानस्वीकारे यत्किञ्चित्प्रतियोगिसत्त्वे ज्ञानसामान्याभावविषयकज्ञानं भवितुं नार्हति तदस्वीकारे च प्रतियोगिरूपज्ञानविषयकज्ञानाभावे कारणाभावे ज्ञानाभावरूपकार्याभावः सेयमुभयतः पाशारज्जुरिति ज्ञानाभावपक्षे। मयिज्ञानं नास्तीत्यादेरपि भावरूपाज्ञानविषयत्वेनैव सर्वसामञ्जस्यमिति चेन्न, उक्तप्रत्यक्षस्य मरुमरीचिकाजलास्वादतुल्यत्वात्, भावरूपाज्ञानस्यापि ज्ञानप्रागभावसमानयोग- क्षेमत्वाच्च, तद्यथा विषयत्वेनाश्रयत्वेन च ज्ञानस्य विशेषकत्वेनप्रत्यगथोऽवभासते न वा, अनवभासते चेत्स्वरूपज्ञानेन निवर्तनीयमज्ञानं तदवभासने कथमवतिष्ठेत, नावभासते चेद्व्यावर्तकाश्रयविषयरहिताज्ञानानुभवः कथं स्यात्। न च प्रमाण- ज्ञानावभासने प्रत्यगात्मन एव ज्ञानविरोधित्वेनाविशदाश्रयविषयज्ञानसत्त्वेऽपि नाज्ञा- नानुभव विरोध इति वाच्यम्, ज्ञानाभावाभावपक्षेऽपि तादृशसमाधानस्य तुल्य- त्वेनाहमज्ञो मामन्यं न जानामीत्यनुभवविषयो ज्ञानाभाव एव लाघवानुगृहीत इति मन्तव्यम्।

## अविद्यानुमानखण्डनम्।

अथास्तु विवरणोक्तानुमानमेवात्रमानम्, तथा हि–विवादास्पदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगत, वस्त्वन्तरपूर्वकम्, अप्र- काशितार्थप्रकाशकत्वात्, अंधकारे प्रथमोत्पन्नप्रदीपप्रभावत्। अत्र पक्षविशेषणी- भूतप्रमाणपदं स्वरूपज्ञानव्यावृत्त्यर्थमन्यथा पक्षकोट्यन्तर्गतस्य ब्रह्मस्वरूपभूतज्ञानस्य

वस्त्वन्तरपूर्वकत्वरूपसाध्यस्याभावेन बाधप्रसंगात्। धारावाहिकबुद्धिस्थले उत्तरोत्तरज्ञानेऽभिमतवस्त्वन्तरपूर्वकत्वाभावेन तद्वयावृत्त्यर्थं विवादास्पदमितिपक्षविशेषणम्। साध्यांशे वस्त्वन्तरपूर्वकत्वमात्रोक्तौ घटपटादिरूपस्वविषयपूर्वकत्वसत्त्वे सिद्धसाधनप्रसंगादिति स्वदेशपदमुक्तं तत्रापि स्वाश्रयगतेत्युक्ते दृष्टांते तमसोऽभावेन साध्यशून्यताप्रसंगापत्तेः। स्वनिवर्त्यपदमपि धर्माधर्मयोः संस्कारस्य व्यावृत्त्यर्थं बोध्यम्। भयादिव्यावृत्त्यर्थं स्वविषयावरणेतिपदम्। प्रागभावस्यापि उक्तलक्षणविशिष्टत्वेन तत्रातिव्याप्तिरिति स्वप्रागभावव्यतिरिक्तेत्युक्तम्। एवं हेत्वंशेऽपि धारावाहिकबुद्धौ व्यभिचारवारणायाप्रकाशितार्थविशेषणम्, इन्द्रियेऽनैकान्तिकत्ववारणाय भासमानत्वमपि हेतुविशेषणं ज्ञेयम्। दृष्टांतेऽपि उत्तरोत्तरप्रभायामप्रकाशितार्थप्रकाशकत्वाभावेन साधनविकलो दृष्टान्तः स्यात्तथा—स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावेन साध्यविकलोऽपि स्यादिति तद्व्यावृत्त्यर्थं प्रथमोत्पन्नत्वविशेषणम्। दिवा प्रथमोत्पन्नप्रदीपप्रभायामप्यप्रकाशितार्थप्रकाशकत्वासंभवेनसाधनवैकल्यव्यावृत्त्यर्थमन्धकार इतिपदं दत्तम्। नचालोकाभावस्य अन्धकारत्वे भावरूपाज्ञाने दृष्टांतः कथं संगच्छत इतिवाच्यम्. चलनक्रियाश्रयत्वेन नीलरूपाश्रयत्वेन च तमसो द्रव्यत्वात्, तदुक्तम्—तमो नाम द्रव्यं बहुलविरलं मेचकचलं प्रतीमु केनापिकचिदपि न बाधश्च ददृश। अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते निरालांके चक्षुः प्रथयति हि तद्दर्शनवशादिति" एवञ्च अप्रकाशितार्थप्रकाशत्वरूपहेतुर्मतिविवादास्पदप्रमाणज्ञाने तादृशविशेषणविशिष्टवस्त्वन्तरज्ञानपूर्वकत्वसिद्धौ उक्तानुमानसिद्धमज्ञानमिति चेन्न अप्रकाशितार्थप्रकाशकत्वहेतुना ज्ञायमानस्वप्रागभावेत्यादिसाध्यविषयकानुमितिरपि भवताप्रकाशितार्थप्रकाशकत्वं स्वीकर्तुमुचितम्, अन्यथाप्रकाशितार्थप्रकाशकत्वमप्रकाशकत्वम्वा प्रसज्येत, तत्र हेतुसत्त्वे, अज्ञानान्तरासत्त्वे च स्वविषयावरणपूर्वकत्वरूपसाध्याभावेनानैकान्तिकत्वापत्तेः। अज्ञानान्तरपूर्वकत्वस्वीकारेऽपसिद्धान्तापत्तेश्च। ज्ञानस्यैकार्थप्रकाशकत्वनियमेन साधनविकलोपि दृष्टांतः, अन्यथाप्रदीपसत्त्वे ज्ञानाभावेऽपि विषयप्रकाशापत्तेः। प्रदीपप्रभायास्तु विरोधिसन्तमसनिरसनद्वारेणोपकारकत्वमात्रमेव। साक्षात्परंपरया विषयप्रकाशत्वांगीकारे इन्द्रियादिषु व्यभिचारापत्तेश्च। जीवज्ञानस्य ज्ञातृतयाज्ञानाश्रयस्य ज्ञानस्वरूपासंभवेन विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रितम्, अज्ञानत्वाच्छुक्तिकाद्यज्ञानवदित्याद्यनुमानेन भव-

दुक्तानुमानस्य प्रतिरोधोऽपि दुर्वार एव। ननु आत्मनिष्ठज्ञातृत्वादेरौपचारिकत्वेन शुक्तिकाद्यज्ञानाश्रयस्य प्रत्यगात्मनोऽपि ज्ञानमात्रस्वरूपत्वमेवेति चेद्बोधविजृंभणमेवैतत्, तथा हि–निर्विशेषस्य ज्ञानस्यासंभवेन स्वविषयग्राहकं ज्ञानं नाम स्वसत्तामात्रेण स्वाश्रयस्वपरव्यवहारहेतुरात्मधर्म एव, तदाधारत्वंच प्रदीपप्रभयोरुभयोस्तेजोद्रव्यत्वेऽपि दीपस्य प्रभाश्रयत्ववदात्मनो ज्ञानस्वरूपत्वेऽप्रपि स्वधर्मभूतस्य यथा पृथक् स्थित्युपलम्भौ न स्याताम् तथा तदाधारत्वमेव। नचात्माज्ञानाधारो ज्ञानमात्रस्वरूपोऽस्त्विति वाच्यम्, तथा सत्यज्ञानमिति ह्यात्मानं ज्ञानत्वेनैव प्रतिसंदधीत नत्वहमिदं जानामीति ज्ञातृत्वेन, अमुमर्थमहं जानामीत्युक्तौ च विषयग्राहिणः कस्यचिज्ज्ञानस्य कश्चिदाश्रय इत्येव ज्ञायते। एवं सत्यात्मनो ज्ञातृत्वं प्रत्यक्षसिद्धमेव। इत्थञ्च कर्तृत्वभोक्तृत्वादिकमपि ज्ञानस्यैवावस्थाविशेष इत्युक्तं भाति। तथा च श्रुतयोऽपि 'मनसैवैतान्कामान्पश्यन्रमते' 'विज्ञातारमरे केन विजानीयात्' ज्ञात्येवायं पुरुषः 'एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः 'एवमेवास्य परिद्रष्टुः' इति। एवञ्च ज्ञानमात्रस्वरूपत्वाभावे नात्मनोऽज्ञानाश्रयत्वेनोक्तानुमानप्रतिरुद्धमवदनुमानेन नाविद्यासिद्धिरित्यलमतिविस्तरेण।

## । अविद्याखण्डने श्रुत्यर्थविचारः ।

अथास्तु श्रुतिरेवात्रमानम्–तथा हि 'हिरण्यनिधिंनिहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेताः सर्वाः प्रजाः अहरहर्गच्छन्त्यएतं ब्रह्मलोकं न विदन्त्यनृतेन प्रत्यूढा इति, 'भूयश्चान्ते विश्वमाया निवृत्तिरित्यादिश्रुत्या ज्ञाननिवर्त्यमायाशब्देनापि अविद्यासिद्धिरिति मैवं शंकिष्ठाः, तत्र ऋतंपिबन्तावितिश्रुत्या ऋतं सत्यं तथा धर्मइति स्मृत्या च ऋतशब्दस्य सत्कर्मपरत्वमनृतशब्दस्य दुष्कर्मपरत्वमवगम्यते, अत एव सुकृतदुष्कृतयोरुभयोरपि मोक्षविरोधिपापहरत्वेन तत्त्यागोपदेशः 'तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैतीतिश्रुत्यासंगच्छते। एवं मायाशब्दस्यापि, मायां तु प्रकृतिं विद्यादित्यादौ विचित्रार्थसर्गकत्रिगुणात्मकप्रकृत्यभिधायकत्वं नानिर्वचनीयाज्ञानपरत्वम्। 'तेन मायासहस्रं तच्छम्बरस्याशुगामिना। बालस्य रक्षता देहमेकैकं तेन सूदित' मिति विष्णुपुराणवचनम्। एवं 'ततो मायां परां चक्रे देवशत्रुः प्रतापवान्।

सिंहान्व्याघ्रान् वराहाँश्च तरक्षूनृक्षवानरान् ॥ मुमोच धनुरादाय प्रद्युम्नस्य रथोपरि। गन्धर्वास्त्रेण चिच्छेद सर्वांस्तान्खंडशस्तदा ॥ प्रद्युम्नेन तु सा माया हता तां वीक्ष्यशम्बरः। अन्यां मायां मुमोचाथ दानवः क्रोधमूर्च्छितः, इत्यादि हरिवंशादिवचनमपि मायाशब्दस्य विचित्रार्थसर्गसमर्थपारमार्थिकासुरास्त्रविशेषस्यैव वाचकत्वे प्रमाणम्। भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रुतावपि माया निवृत्तिपदेन 'मायामेतां तरंति ते' इति स्मृतिबलात्तादृशमायातारणस्यैवावगमात्। 'मयज्ञान' इति धात्वर्थानुसारान्मायाशब्दस्याज्ञानवाचित्वासंभवाच्चानिर्वचनीयाज्ञानकथनं भवतो मनोराज्यमेवेति।

## अविद्यायामर्थापत्तिखण्डनम्।

अथैक्योपदेशानुपपत्त्यैवानिर्वचनीयाज्ञानं सिध्यतु, अयमाशयः—चतुर्धासामानाधिकरण्यमद्वैतिनां मतम्, तच्च सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिस्वरूपबोधकसत्यादिपदानां मिथ्यात्वादिव्यावृत्तिपरत्वेन वस्त्वैक्यपरत्वमाद्यम्, तत्त्वमसीत्यादिजीवब्रह्मसामानाधिकरण्यमन्वयद्वारोपलक्षितवस्त्वैक्यपरत्वमपरम्। अचिद्ब्रह्मणोः 'सर्वं खल्विदं ब्रह्म'त्यादिवाक्यद्वारा जगतोऽवास्तविकत्वारोपरूपसामानाधिकरण्यम् तृतीयम्। 'ज्योतींषि विष्णु'रित्यादौ बाधार्थसामानाधिकारण्यं चतुर्थम्। तत्र तत्त्वमसीत्यादिवचननिचयैः जीवपरयोरैक्योपपादनं निर्विशेषब्रह्मणो भेदप्रतिपादकश्रुतिसिद्धस्वरूपतिरोधानपूर्वकजीवभावप्रापकहेतुं विनाऽशक्यमिति तत्प्रापकत्वेन सदसद्भ्यामुत्तीर्णानिर्वचनीयाविद्यैव सिध्यतीत्यपि गगनरोमन्थतुल्यम्। तथा हि—तत्पदं निरस्तसमस्तदोषमखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपमनवधिकातिशयज्ञानशक्त्याद्यसंख्येयकल्याणगुणगणविभूषितं सकल जगदुदयस्थितिलयलीलं चतुर्विधपुरुषार्थप्रदं विलक्षणविग्रहयुक्तं श्रीवल्लभं लीलानायकं ब्रह्माभिदधाति, उपक्रमोपसंहाराभ्यां तत्र तत्र तस्यैवोक्तत्वात्। तत्समानाधिकरणं त्वं पदं वा चिद्विशिष्टं जीवशरीरं ब्रह्म प्रतिपादयति।

एतदुक्तं भवति—अचित्पदार्थो जीवशरीरं तादृशजीवश्च ब्रह्मशरीरमेवञ्च त्वंपदं जीवशरीरकब्रह्मबोधकं तत्पदञ्च सर्वज्ञत्वादिगुणविशिष्टब्रह्मबोधकम्, सामानाधिकरण्यमपि विशेषणद्वयविशिष्टैकविशेष्यकबोधनमेव, तदुक्तं 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति'। एतेन सोयं

देवदत्त इत्यादिवत् तत्त्वंपदयोः किञ्चिज्ज्ञत्वसर्वज्ञत्वादि विरुद्धांशत्यागेन भागत्यागलक्षणयाखंडार्थस्वरूपमात्मैक्यसामानाधिकरण्यं प्रत्युक्तं वेदितव्यम्. जीवेशयोः शरीरात्मभावेन तादात्म्यलक्षणसामानाधिकरण्येनवसर्वसामञ्जस्यात्। इत्थञ्च 'अस्य सौम्यपुरुषस्य प्रयतो वाङ्मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायां, स य एषोऽणिमा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति संगमनात्मकच्छान्दोग्यश्रुत्या सूक्ष्मजीवात्मनो महति परमात्मनि शरीरात्मभावेन संपत्तिबोधनात्तत्त्वमसीत्यस्य तदात्मकस्तदन्तर्यामीत्वमसीत्येवार्थः श्रेयान्। 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येपत आत्मान्तर्याम्यमृत इति बृहदारण्यकश्रुतिरप्यत्रैवप्रमाणम् नाप्यहमुब्रह्मास्मीत्यादिवाक्यं जीवपरमात्मैक्यप्रतिपादनपरम्। तत्र मञ्चाःक्रोशन्तीत्यादिवत्तात्स्थ्योपाधितयैव समन्वयसंभवात्। न च पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यमिति प्रामाण्यादशेषजगतो ब्रह्मस्थत्वसिध्या विशेषरूपेणजीवब्रह्मणोस्तथाकथनमैक्यपरमेवेति वाच्यम्. यद्यपि सकलं जगद्ब्रह्मस्थमेव तथापि यादृशसाधर्म्यभावात् जीवस्यैकत्वं तथा तेषामभावात् यतो हि ब्रह्मज्ञानेन मुक्तावस्थायां साक्षात्संबन्धद्वारा नित्यसहावस्थोजीवः अतो विशेषरूपेण तात्स्थ्यं जीवस्यैवेतिबोध्यम्। अथवा—अभिन्नहृदयत्वेन देवदत्तभवदत्तावेकएवेति लोकव्यवहारवत्समाधिस्थयोगी प्रेमभक्त्यतिरिकेण अहं ब्रह्मास्मीत्युद्गारयतीति न किञ्चिदनुपपन्नम्। एवमयमात्मा ब्रह्मत्यादावपि सिंहो माणवक इतिवदेवाश्रयसादृश्यात् ब्रह्मतुल्यो जीव इत्यर्थोबोध्यः। किञ्चप्रमाणाभावादपिननिर्विशेषवस्तुसिद्धिः, निर्विकल्पकप्रत्यक्षस्यापि संस्थानरूपजात्यादिवैशिष्ट्यावगाहनात्। तस्ययावद्विशेषशून्यत्वे सविकल्पदशायां सोयमिति प्रत्यभिज्ञापि न स्यात्। किन्त्वेतावदेवविशेषो यत्सविकल्पके गोत्वादिजातिरनेकव्यक्तिवृत्यनुवृत्ताकारतया प्रतीयते. निर्विकल्पके तु केवलमेकैव व्यक्तिः प्रतीयते। प्रत्यक्षगृहीतव्याप्तिपक्षधर्मतादिज्ञानकारणकमनुमानमपि सविशेषविषयमेव। प्रकृतिप्रत्ययार्थयोः विशेषणविशेष्यसम्बन्धविषयत्वेनपदवाक्यात्मकशब्दानाञ्च ताद्रूप्यमेवेति।

## अविद्याया आश्रयाद्यनुपपत्तिः

किञ्चाविद्याया आश्रयाद्यनुपपत्यापि भ्रान्तपुरुषप्रयुक्तरज्जुसर्पादिवाक्यवत्

ब्रह्मात्मैक्यज्ञानं न प्रपञ्चनिवर्तकम्। एतदुक्तं भवति–आश्रयानुपपत्ति, तिरोधानानुपपत्त्यनिर्वचनीयत्वानुपपत्ति, स्वरूपानुपपत्ति, प्रमाणानुपपत्ति, निवर्तकत्वानुपपत्ति, निवृत्त्यनुपपत्तिभेदेन सप्तधानुपपत्तिर्मायावाद्यभिमताऽविद्यायां भवति, तद्यथा अविद्याकल्पितजीवं विनाविद्यानुपपत्तिरित्यन्योन्याश्रयान्न जीवस्तदाश्रयो नापि ब्रह्म, तस्य स्वप्रकाशज्ञानरूपत्वेन तमःप्रकाशवत्तद्विरोध्यज्ञानाश्रयानुपपत्त्याश्रयानुपपत्तिः। नापि तिरोधानोपपत्तिस्तन्मतेऽविद्यायाः पारमार्थिकदोषाभावेन निर्विशेषचिन्मात्रानुभूतौ तदुत्पत्तेरसंभवात्। अपारमार्थिकत्वपक्षेऽपि दोषपरंपराधावनेऽनवस्थापातः, ब्रह्मणो दोषरूपत्वेऽविद्याया नित्यत्वात्यानिवृत्त्यभावेन मोक्षासंभवः। प्रतीत्या वस्तुव्यवस्थानैयत्यात्, प्रतीतिश्च काचित्सद्विषया, चिच्चासद्विषयैव, तदुक्तं सर्वार्थसिद्धौ–"नासत्प्रतीतेर्बाधाच्च न सदित्यपि यन्न तत्। प्रतीतेरेव सत्किन्न बाधान्नासत्कुतो जगदिति" सदसद्विलक्षणानिर्वचनीयत्वानुपपत्तिः। पूर्वोक्तप्रकारेण तत्र प्रमाणानुपपत्त्या स्वरूपानुपपत्तिः सिद्धैव। निर्विशेषवस्तुप्रतिपादकवाक्यज्ञानयोरभावेन निवर्तकानुपपत्तिरेवं निवृत्त्यनुपपत्तिरपि। का पुनरत्र निवृत्तिरिति चिन्तनीयम्। अनिर्वचनीयविरोधिनी निवृत्तिरिति चेत्तदानिर्वचनीयविरोधिनिर्वचनीयमित्यायातम् तच्च सत्, असत्, सदसद्वेति स्यात्तथा च नेष्टसिद्धिः, किञ्च निवृत्तेः ब्रह्मातिरिक्तत्वे भेददर्शनरूपाविद्यानिवृत्तिर्न स्यात् ब्रह्मस्वरूपत्वे च स्वरूपनित्यत्वेनैक्यज्ञानात् पूर्वमपि स्वरूपस्य विद्यमानतयैक्यज्ञानादविद्यानिवृत्तिस्तदभावे संसार इति सिद्धान्तभंगापत्तेः। किञ्च निवर्तकज्ञानस्यापि ब्रह्मव्यतिरिक्तत्वे तन्निवृत्तिः कथमिति वक्तव्यम्, ज्ञानान्तरादिति चेत् तत्राप्येवं क्रमापातादन्ततः एकज्ञानमवशिष्येत्। अपि च ब्रह्मव्यतिरिक्तसमस्तवस्तुनिषेधो विषयज्ञानज्ञातृत्वमध्यासरूपस्य न संभाव्यते तस्यापि निषेधत्वात्। निवर्तकज्ञानस्य च कर्मत्वेन कर्तृत्वमसंभवि, ब्रह्मण एव ज्ञातृत्वेऽद्वैतपक्षं विहाय विशिष्टाद्वैतपक्षप्रवेशापातात्। अथ श्रुतिबोधितमैक्यज्ञानमेव तन्निवर्तकमित्यपि बालभाषितं, तथा हि–ब्रह्मव्यतिरिक्तायास्तस्या अविद्याकल्पितत्वेन प्रपञ्चबाधकज्ञानोत्पादकत्वासंभवात्। न च दुष्टकरणजन्यस्यापि क्वचिद्यथार्थविषयत्वं दृष्टमिति अविद्याकल्पितवाक्यजन्यज्ञानमपि भ्रमनिवर्तकं स्यादेवेति वाच्यम्, रज्जुसर्पज्ञानभयवेलायां भ्रान्तत्वेनाज्ञानपुरुषोक्तरज्जुबोधकवाक्यस्य रज्जुसर्पज्ञानभयनिवर्तकत्वादर्शनेन श्रवणवेलायां श्रुतेरपि भ्रान्तिमत्त्वज्ञानेन प्रपञ्चबाधकत्वासंभवात्। न च

प्रपञ्चस्य सत्यत्वप्रतिष्ठापनपक्षे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाव्याकोप इति वाच्यम्, अधस्तादुक्तप्रकारेण कार्यमपि सर्वं ब्रह्मैवेति कारणभूत ब्रह्मज्ञानादेव सर्वविज्ञानमित्येकविज्ञानेन सर्वविज्ञानस्योपपन्नतरत्वात्। प्रत्युत-अद्वैतपक्ष एव ब्रह्मव्यतिरिक्त सर्वस्यासत्त्वादेव सर्वविज्ञानप्रतिज्ञा नोपपद्यते। सर्वपदस्य सर्वाभावलक्षकत्वे च लक्षणैवदोषः। एकसर्वपदार्थयोस्तादात्म्यावगमेऽपि सर्वपदवाच्यप्रपञ्चस्य मिथ्यात्वे तत्तादात्म्यापन्नब्रह्मणोपि मिथ्यात्वापत्तिः। ब्रह्म तादात्म्यापन्नजगतोपि वा सत्यत्वापत्तिरित्थञ्च प्रकृतिपुरुषशरीरं कारणावस्थं ब्रह्मैव स्वल्पांशांशेन सर्वाश्चर्यरूपं सदात्मकनामरूपविभागविभक्तस्थूलचिदचिद्वस्तुशरीरं कार्यावस्थं सत्तदन्तरात्मतया प्रविश्य विष्टभ्य नानात्वेनावस्थितमप्यनवधिकातिशयासंख्येयकल्याणगुणगणसर्वेश्वरपुरुषोत्तमनारायणपदवाच्यमेकमेवेति कार्यकारणयोरनन्यत्वमारंभणाधिकरणे प्रतिपादितमुपपन्नतरं भवति। पादोऽस्य सर्वा भूतानि, विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्, अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा इति श्रुतिस्मृतिभ्यः। 'एकत्वे सति नानात्वं नानात्वे सति चैकता। अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति' इति च।

## नेतिनेतीत्यादिश्रुत्यर्थविचारपुरस्सरं ब्रह्मणः सविशेषत्वनिरुक्तिः।

नन्वेवमथातआदेशो नेति नेत्यादिसकलनिषेधपरश्रुतीनां का गतिरिति चेन्न, किमत्र निषिध्यत इतिवक्तव्यम्। द्वे वाव ब्रह्मणो रूपे मूर्तञ्चैवामूर्तञ्चेति मूर्तामूर्तात्मकसर्वप्रपञ्चो निषिध्यत चेत् ब्रह्मणो रूपत्वेनाप्रतिज्ञाततया निषेधायोगात्, रूपवत्त्वं विधाय निषिध्यत इत्यपिनोचितम्, विहितस्य निषेधो नोपपद्यते, तथासति वेदस्य विप्रलंभकत्वेन निषेधवाक्यमप्यप्रमाणं स्यात्। कस्तर्हिनिषेधशब्दार्थ इति जिज्ञासायामाह सूत्रकारः 'प्रकृतैतावत्त्वंहि प्रतिषेधति ततो ब्रवीति च भूयः' अयं भावः—अथात आदेशो नेति नेतीति निषिध्यानन्तरमथनामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमिति सत्यादिगुणगणादिप्रतिपादितन्तत्र ब्रह्मणस्तावन्मात्रता निषिध्यते श्रुत्या पूर्वप्रकृतैतावन्मात्रता न भवति ब्रह्मणो, न मूर्तामूर्तनिषेधपरताश्रुतीनामिति बोध्यम्। नच नेह नानास्ति किञ्चनेत्यादिनानात्वनिषेध एव प्रतिज्ञात इतिवाच्यम्. समस्तचेतनाचेतनात्मकवस्तुनो ब्रह्मशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यब्रह्मात्मकनानात्वनिषेधपरत्वा-

च्छ्रुतीनां न भवदभिमतसर्वविशेषनिषिधपरत्वमेवं 'साक्षी चेता केवलो निर्गुणश्च, निष्कलं निर्गुणं शान्तमित्यादिनिर्गुणवादाश्च प्राकृतहेयगुणनिषेधविषयतयैव व्यवस्थिता इति सकलभेदाभेदवादिश्रुतीनां सावकाशत्वे न विरोधगन्धोऽपीति।

## ब्रह्मणोऽर्चाविभवादि पञ्चव्यूहकथनम्।

सएवचाचिन्त्यशक्तिमदशेषाप्राकृतगुणविभूषितपुरुषोत्तमादिपदवेदनीयः परमकारुणिको भक्तवत्सलः परमपुरुषोऽसंकुचितापरिच्छिन्ननिर्मलज्ञानस्वरूपाणामनादिकर्मरूपाविद्या वेष्टितानां जीवात्मनामनुग्रहायतत्तदुपासकानुगुणतत्तत्फलप्रदानाय स्वलीलावशादर्चा विभव व्यूह सूक्ष्मान्तर्यामिभेदेन पञ्चधावतिष्ठते। **तदुक्तं विष्वक्सेनसंहितायाम्**-स्वयमेव भगवता 'मम प्रकाराः पञ्चेति प्राहुर्वेदान्तपारगाः। परां सूक्ष्म) व्यूहश्च विभवो नियन्ता सर्वदेहिनाम्॥ अर्चावतारश्च तथा दयालुः पुरुषाकृतिः।' एति तत्र अर्चा पूजाप्रतिमयोरित्युक्त्यार्चाशब्दस्य प्रतिमावाचित्वेन स्वर्णरजतशिलादिषु स्वाभिमतविग्रहवद्रामकृष्णादिप्रतिमां विधायाधिकारादिनियमं विना पूजनध्यानादिकम्। **तदुक्तम्**-सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम्। कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः॥ तामर्चयेत्तां प्रणमेत्तां पूजयेत्तां विचिन्तयेत्। विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्'। इति। **विभवोपि तथानन्तो ह्यधंवपरिकीर्त्यते। गौणमुख्यविभागेन शास्त्रेषु च हरेर्मुने**॥ इत्युक्तप्रकारेण विभवस्यानन्तत्वेपि गौणमुख्यभेदेन द्वैविध्यम् इतरसजातीयेनाविर्भावरूपगौण आवेशावतारः, आवेशोपि **स्वरूपावेश शक्त्यावेश**भेदेन द्विविधः। तत्र स्वेन रूपेणावेशः परशुरामादिरूपः। साक्षादवतारो रामकृष्णमत्स्यवराहनृसिंहादिरूपोमुख्यः। ननु लोके कर्माधीनं जन्मग्रहणं भगवतस्तदभावादेवंविधावताराणांको हेतुरिति चेदिच्छैवेत्यवहि, एकोऽहं बहु स्यां प्रजायेय, आत्मानं सृजाम्याहम् ,संभवाम्यात्ममायया, इत्यादिश्रुतिस्मृतिप्रूत्तमपदप्रयोगादैच्छिकावतार एवेति सिध्यति। फलञ्च साधुत्राणादिकम्, तदुक्तं भगवता श्रीमुखेन, परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय संभवामि युगे युगे इति। यत्र क्वचिद् भृगुशापादिनावतारकारणमुक्तं तत्रापि शापो व्याजः अवतारस्त्वैच्छिक एवेति बोध्यम्। व्यूहो नाम सृष्टिस्थितिसंहारार्थसं सारिसंरक्षणार्थमुपासकानामनुग्रहार्थञ्च संकर्षणप्रद्युम्नानिरुद्धरूपेणावस्थितिः। तत्र संकर्षणो ज्ञानबलप्रयुक्तो जीवतत्त्वमधिष्ठाय

तत्प्रकृतेः विविच्य प्रद्युम्नावस्थां प्राप्य शास्त्रप्रवर्तनं जगत्संहारञ्च करोति। प्रद्युम्न ऐश्वर्यवीर्ययुक्तोमनस्तत्त्वमधिष्ठाय धर्मोपदेशं मनुचतुष्टयप्रभृतिशुद्धवर्गसृष्टिञ्च करोति। अनिरुद्धः शक्तितेजोयुक्तो रक्षणस्य तत्त्वज्ञानप्रदानस्य कालसृष्टेर्मिश्रसृष्टेश्च निर्वाहक इति विशेषतस्तत्त्वत्रये द्रष्टव्यम्। सूक्ष्मं (परं) संपूर्णषड्गुणं वासुदेवाख्यं परं ब्रह्मानवधिकानन्दे श्रीवैकुंठे नित्यमुक्तानां भोग्यत्वेनावस्थितम्। तथोक्तम्–सूर्यकोटिप्रतीकाशाः पूर्णेन्दुयुतसन्निभाः। यस्मिन्पदे विराजन्ते मुक्ताः संसारबन्धनैरिति। **वैकुंठे तु परे लोके नित्यत्वेन व्यवस्थिताः। पश्यन्ति च सदादेवं नेत्रैर्ज्ञानेन चामराः** इति च। अन्तर्यामित्वमन्तःप्रविष्टः शास्ताजनानां, शास्ता विष्णुरशेषस्य जगतो यो हृदिस्थितः, इत्यादिश्रुत्युक्तप्रकारेण चेतनानामन्तः प्रविश्य सकलप्रवृत्तीनां नियन्तृत्वम्। एतेषां पूर्वपूर्वोपासनया पुरुषार्थपरिपन्थिदुरितनिचयविलये उत्तरोत्तरोपास्त्यधिकारः संपद्यते। तदेतत्सर्वमभिसंधायाह–वासुदेवः स्वभक्तेषु वात्सल्यात्तदीहितम्। अधिकार्यानुगुण्येन प्रयच्छति फलं बहु॥ तदर्थं लीलया स्वीयाः पञ्चमूर्तीः करोति हि। प्रतिमादिकमर्चा स्यादवतारास्तु वैभवाः॥ संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः। व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मं संपूर्णषड्गुणम्॥ तदेववासुदेवाख्यं परं ब्रह्म निगद्यते। अन्तर्यामी जीवसंस्थोजीवप्रेरकईश्वरः॥ य आत्मनीति वेदान्तवाक्यजालैर्निरूपितः। अर्चोपासनयाक्षिप्ते कल्मषेऽधिकृतो भवेत्॥ विभवोपासने पश्चाद्व्यूहोपास्तौ ततःपरम्। सूक्ष्मे तदनुसक्तः स्यादन्तर्यामिणमीक्षितुम्॥ इति।

## भगवत्प्राप्त्युपायनिरुक्तिः।

एतादृशभगवत्प्राप्त्युपायभूतमुपासनमभिगमनोपादानेज्यास्वाध्याययोगभेदेन पञ्चविधम्। तत्राभिगमनं देवायतनस्थानस्य संमार्जनोपलेपनादिकम्, उपादानमर्चासाधनसामग्रीसम्बलनम्, इज्या देवयजनम्, स्वाध्यायो नाम अर्थानुसंधानपूर्वकं वैष्णवमंत्रजपसूक्तपाठनामकीर्तनवेदान्तशास्त्राभ्यासः, योगश्च श्रुतिसूत्रस्मृतिपुराणादिसिद्धदेवैकप्रवणं चित्तवृत्तिरूपं ध्यानम्, एवं विधेनोपासनकर्मसमुच्चितेन ज्ञानेन द्रष्टृदर्शनादिरूपद्वैतनिवृत्तौ स्वविषये निवातस्थिततैलधारसमानाऽविरतभक्तियुक्तस्य भक्तस्य भक्तवत्सलः परमकारुणिकः पुरुषोत्तमो नारायणः स्वस्वरूपस्वभावयथावदनुभवानुरूपानवधिकानन्दरूपं पुनरावृत्तिरहितं स्वपदं

प्रयच्छति। तस्य तावदेव चिरं यावन्नसंपत्स्येऽथ विमोक्ष्ये' न स पुनरावर्तते, ब्रह्मविद्ब्रह्मैव भवति, मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः इतिश्रुतिस्मृतिभ्यः। का चेयं भक्तिर्येन तुष्टो हरिः स्वपदं प्रयच्छति। शृणु—साक्षात्काराभिनिवेशः निरतिशयप्रियानन्यप्रयोजनसकलेतरवैतृष्ण्यावहज्ञानविशेष एव। एवंविधभक्तिरूपज्ञानविशेषसिद्धिश्च वर्णाश्रमाचारपूर्वककर्मानुगृहीतभक्तियोगाद्भवति। **तदुक्तं भगवता पराशरेण**—वर्णाश्रमाचारवता पुरुषेण परः पुमान् विष्णुराराध्यते पन्था नान्यः तत्तोपकारणमिति।

## मुक्तिसाधनसमीक्षा!

ननु ब्रह्मविद् ब्रह्मैव भवति, यत्र तु सर्वमात्मैवाभूद्विजानतः, तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेत्यादिश्रुतिव्याकोपभयात्केवलं ज्ञानमेवमुक्तिसाधनं न भक्तिरिति चेद्भावानवबोधात्, तथा हि—नायमात्मप्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैषवृणुते तेन लभ्यः तस्यैष आत्मा वृणुते तनूं स्वामिति श्रुतिः केवलवेदनं न मेधयेत्ति निषिध्य वेदनशब्देन भक्तिरूपापन्नानुध्यानमेवविशिनष्टि। एवञ्च निदिध्यासितव्य इत्यनेनैकार्थ्यमन्यथा आत्मेत्येवोपासीत, पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया. भक्त्या त्वनन्यया शक्योऽहमेवं विधोऽर्जुन। ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप इत्यादिश्रुतिस्मृतिव्याकोपप्रसंगात्। न च तमेवेत्यत्रैवकारस्यपर्युदासेनविदित्वैवेति केवलज्ञानेतरध्यानोपासनादिरूपं वेदनं न लभ्यत इति वाच्यम् तत्रैवकारस्य वेदनेतरसाधननिषेधनपरत्वं न तु ध्यानोपासनादिरुपवेदननिषेधपरत्वमन्यथाधस्तादुक्तश्रुतेः—तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते। तेषामेवानुकंपार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता इति स्मृतेश्च। तेषां भक्तियोगसमन्वितानामेवेति श्रीभगवदुक्तैवकारस्य चैकवाक्यतासिद्धयेऽस्मदुक्तवेदनमेव शास्त्रसंमतं प्रतिभाति। इत्थञ्च वेदविहितवेदनरुपध्यानादिनिष्ठो यदा मुमुक्षुर्भवति तदास्य तदनुध्यानदार्ढ्याद्भगवति निरवधिकमतिशयाप्रेमभक्तिरुपा पराप्रीतिर्जायते ततः परमपुरुषोलभ्यते नान्यथेत्यभिप्रायेणैवोक्तश्रुतिस्मृतिषु एवकारार्थः संगच्छते। **उक्तंच** 'उक्तोपासनया

पुंसां वासुदेवः प्रसीदति'। 'प्रसन्नात्मा हरिर्भक्त्या निदिध्यासनरूपया ॥ अविद्यां कर्मसंघातरूपां सद्यो निवर्तयेत् ॥ ततः स्वाभाविकाः पुंसां ते संसाराः तिरोहिताः। आविर्भवन्तिकल्याणाः सर्वज्ञत्वादयोगुणाः ॥ ननु यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्तिनामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैत्ति दिव्यमित्यादिश्रुतिर्नामरुपोपलक्षितसर्वधर्मविनिर्मोकपूर्वकमेकीभावस्यैव मुक्तावस्थायां विदुषोऽभिधानादाविर्भूतसर्वज्ञत्वादिधर्मकथनमसंगतमेवेतिचेन्न, अधस्तादुक्ताखिलहेय प्रत्यनीकगुणवन्नित्यविग्रहब्रह्मसाक्षात्कारस्यैव मुक्तित्वाभिधानेन अविनाशी वा रेयमात्माऽनुच्छित्तिधर्मेत्यादिश्रुतिसमन्वयबलेनौचित्यादीश्वरवदपहतपाप्मत्वादिगुणवत्त्वं तदा विदुषोपीति श्रुतिस्मृत्यादीनां तथैव स्वारस्यात्। केवलं सर्वकर्तृत्व मीश्वरे विशेषः।

## मुक्तावस्था निर्वचनगर्भप्रकरणोपसंहारः।

**तदुक्तम्** 'एवं गुणाः समानाः स्युर्भक्तानामीश्वरस्य च। सर्वकर्तृत्वमेवैकं तेभ्यो देवे विशिष्यते ॥ मुक्तस्तु शेषिणि ब्रह्मण्यशेषे शेषरूपिणः। सर्वानश्नुते कामान् सह तेन विपश्चिता इति। सरित्समुद्रादिसलिलदृष्टांतोपि न विरुद्ध्यते तत्र बाह्यदृष्टया विवेकासंभवेपि दिव्यदृष्टया परस्परविवेकदर्शनसंभवात्, तस्मात् दुःखत्रयाभिघातभीरुभिर्यथोक्तसाधनसंपन्नैः पुरुषोत्तमादिपदवेदनीयमेव ब्रह्मवेद्यमिति विशेषत आकरग्रंथत एवावगन्तव्यमित्यलं सरःसलिलावगाहनेच्छया महोदधि प्रवेशेनेति ॥

**॥ इति श्री सर्ववेदान्तसारसंग्रहे श्री रामानुजदर्शनं नाम पंचमःस्तवकः ॥ ॥ ५ ॥**

---

## ॥ अथ केवलाद्वैतदर्शनसारसंग्रहः ॥

**तज्जयति सच्चिदानन्दं द्वैतातीतं परं महः।**
**कृपया यस्य ज्ञानाद्वन्धध्वानाज्जगद्ब्रह्म ॥**

## पदार्थप्रक्रियादिग्दर्शनम्

अथ सजातीयविजातीयस्वगतनानात्वशून्यं देशकालवस्तुपरिच्छेदरहितं निर्गुणं निष्क्रियं शान्तमद्वैतं केवलं ब्रह्मैव वस्तु तत्रैव सर्वश्रुतिस्मृत्यादितात्पर्यावि-

धारणात्। तदविद्यया चोच्चावचभेदभिन्नव्यवहारकालमात्रसिद्धंजगत्तत्त्वतो न सत् किं तु मिथ्या, तत्सत्त्वे तदुच्छेदासंभवेन द्वैतभानाद्ब्रह्मभावापत्तिलक्षणामृतीभावासंभवप्रसंगात्, इत्यद्वैतिनां सरणिः। तथा हि चैतन्यं जडश्चेति पदार्थो द्विविधः। चैतन्यमपि ब्रह्मेश्वरजीवभेदादनेकविधम्। स्वाश्रयव्यामोहिकामलिनसत्वप्रधानाऽविद्या तदुपाधिकं जीवचैतन्यं. तत्राप्यविद्याया विशेषणत्वे जीवत्वमुपलक्षणत्त्वे च तत्साक्षित्वम्। एवं स्वाश्रयव्यामोहिका शुद्धसत्त्वप्रधाना माया तदुपाधिकञ्चेश्वरचैतन्यमत्रापि मायाया विशेषणत्वे ईश्वरत्वमुपलक्षणत्त्वे चेश्वरसाक्षित्वम्। ब्रह्म तु सर्वधर्मसंसर्गरहितं मायोपहितंसज्जगत्कारणं तदुपाधिरहितञ्च कूटस्थम्। जडन्त्वज्ञानादितन्मूलकमाकाशादि च दृश्यत्वादनिर्वचनीयम्। **तत्राज्ञानं** नानाशक्तिमत्केवलसाक्षिभास्यं भावरूपम्। तदपि मूलाज्ञानतूलाज्ञानभेदेन द्विधा। उभयत्रावरणविक्षेपात्मकं शक्तिद्वयम्। तत्र यथा लोके आवरणशक्त्यवच्छिन्नाज्ञानेन शुक्त्यवच्छिन्नचैतन्यावरणाच्छुक्तित्वं न स्फुरति तत्रैव विक्षेपशक्तिमदज्ञानेनानिर्वचनीयरजतरूपं कार्यमुत्पद्यते। एवं शक्तिद्वयवन्मूलाज्ञानेनापि सच्चिदानन्दरूपपरमात्मा आव्रियते, अनिर्वचनीयाकाशादिप्रपंचस्तत्रैवोत्पद्यते। अपरा अप्यापेक्षिक **पारमार्थिकप्रपंचदर्शनानुकूला, व्यावहारिकप्रपंचदर्शनानुकूला,** प्रतिभासिकप्रपञ्चदर्शनानुकूला चाज्ञानशक्तयः सन्ति, श्रवणमनननिदिध्यासनपरिपाकवशाच्च सशक्तिकोभयाज्ञानविलये तत्त्वज्ञानात्परमकैवल्यलक्षणं सर्वधर्मविनिर्मुक्तं निर्गुणमद्वैतरूपं निःश्रेयसमप्राप्तमिव प्राप्तं भवति, तदुक्तं तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः, तमेवविदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय इति।

अथ भवदभिमतनिर्विशेषाद्वैतस्य सोपाधिकजीवेश्वरविभागस्य तादृशाविद्यासिद्धया जगन्मिथ्यात्वस्य ज्ञानमात्रापेक्षमुक्तेश्च श्रुतिसूत्रस्मृतिपुराणदिभिरसिध्या निर्मूलैवैतत्प्रक्रियेति चेन्न, प्रेक्षावद्बुद्धिपूर्वकालोचनया श्रुतिस्मृतिपुराणजातैर्निर्गुणाद्वैतवादे सर्वशंकाकलंकपंकप्रक्षालनात्सर्वशास्त्रार्थो वीशदीभवति, तत्र प्रथमं ब्रह्मचैतन्यं सविशेषं निर्विशेषं वेति विचार्यते।

## ब्रह्मणोनिर्गुणत्वनिरुक्तिः।

सविशेषसाधकप्रमाणाभावान्निर्विशेषश्रुतिप्राबाल्याच्च निर्विशेषमेव ब्रह्म, सगुण

श्रुतीनामुपासनाप्रकरणस्थत्वेनोपास्तिविधिविषयसमर्पकतया स्वरूपबोधे नैराकांक्ष्यात्। निर्गुणप्रकरणस्थत्वेनाद्वितीयब्रह्मप्रतिपत्त्यनुकूलनिषेधापेक्षितनिषेध्यसमर्पकतया, अन्यशेषत्वाज्जर्तिलजवाग्वा वा जुहुयादित्यत्रेव वा स्वार्थसत्यत्वे प्रमाणाभावात्। एवञ्च निर्गुणश्रुतिविरोधेन सगुणश्रुतीनामपरब्रह्मविषयत्वमेवास्थेयम्। न च निर्गुण ब्रह्मणः साम्प्रतमसिद्धया तात्त्विकगुणवद्ब्रह्मकल्पान्तराभावाच्च सगुणश्रुतिनिर्विषया स्यादिति वाच्यम्, चरमब्रह्मणः सगुणश्रुतिविषयत्वासंभवेन निर्धर्मकश्रुत्या शुद्धसिद्धया च सगुणश्रुतेरपि विषयत्वसंभवात्। एतेन—क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोस्मिलोके वेदे च प्रथितः पुरुषोत्तमः। परः पराणाम्, अन्तस्तद्धर्मोपदेशादित्यादिस्मृतिसूत्राभ्यां सर्वोत्कृष्टत्वप्रतिपादनेन सगुणवाक्यानां परब्रह्मविषयत्वं निरस्तम्। तत्रशुद्धापेक्षयाऽपरस्यापि जडवद्धजीवापेक्षयोपासनीयसर्वज्ञब्रह्मणः परत्वकथने तात्पर्यात्। **तदुक्तं कल्पतरुकृता**-निर्विशेषं परंब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात्। तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्॥ इति। अत एव सगुणश्रुतेरौपाधिकगुणपरत्वेन स्वाभाविकनिर्धर्मकश्रुत्या न विरोधः। न च गुणानामौपाधिकत्वे 'स्वाभाविकी ज्ञानबलक्रिया चेत्यनेन ज्ञानादिधर्माणां स्वाभाविकत्वकथनाद्विरोधो दुष्परिहर इति वाच्यम्। अस्मदादिगुणनिष्ठभौतिकत्वस्य, योगिगुणवृत्तियोगसंपादितत्वस्य च तत्राभावेन स्वाभाविकत्वोक्तेः। अत एव 'सत्यः सोस्य महिमा' इत्यादयोपि व्याख्याताः। सत्यादिपदानां स्वरूपपरत्वेऽविरोधात्, धर्मत्वे ब्रह्मसाक्षात्कारेतरानिवर्त्यत्वेनैव सत्यपदप्रयोगोपपत्तेः। तत्रैतावता 'सत्यं·

---

१–टि०–" जर्तिलयवाग्वावा जुहुयात्, गवीधुकयवाग्वावाजुहुयात्। नग्राम्यान्पशून्हिनस्ति, नारण्यान्। अनाहुतिर्वैजर्तिलाः, गवीधुकाश्च। पयसाऽग्निहोत्रंजुहुयात्।" अत्रग्राम्याऽरण्यपशुहिंसापेक्षया जर्तिलगवीधुकयोः प्रशस्तयोरपि 'अनाहुतिर्वै' इत्यनेन निषिध्य पयोहोमस्यातिप्राशस्त्येनविधानान्नजर्तिलादेः होमविधिरूपस्वार्थपरत्वं किन्तु निषेध्यसमर्पकत्वमात्रम्, तथा सगुणश्रुतीनामपिप्युपास्तिविषयसमर्पकत्वमात्रेतात्पर्यम्। जर्तिला अरण्यतिलाः, गवीधुका अरण्यगोधूमाः।

ज्ञानं' 'तत्त्वमसी'त्यादिश्रुत्युक्तब्रह्म सत्यत्वैक्यादिकमप्यतात्त्विकं बोध्यम्। गुणादिसत्यत्वस्य निर्गुणश्रुतिविरोधवत ब्रह्मसत्यत्वादिषु निर्गुणश्रुतिविरोधस्याभावात्। यत्तु [1]ग्रहणाग्रहणशास्त्रवत् श्रुत्योर्विरोधे समबलोभयशास्त्रप्रामाण्यादन्यतरबाधासंभवेन संकोचेन विकल्पेन वा भवितव्यमिति तत्तुच्छम्। एकतरस्यप्रतीयमानार्थतात्पर्यमपरस्य नेतिसमबलाभावात्प्रबलनिर्गुणश्रुत्यनुरोधेनैव सगुणश्रुतीनान्नेयतया तस्या गुणतात्त्विकतायां प्रामाण्यासंभवात्। अत एवेक्षत्यधिकरणसिद्धेक्षणादिधर्मवत्त्वेनापि विरोधः परिहृतो बोध्यः। तत्रेक्षणादौ तात्त्विकत्वाभावात्। राजामात्यादौ राजत्वारोपसंभवेपि स्तंभादौ तदसंभवेनातात्विकेक्षणादेरपि प्रधाने योग्यत्वसूचनेन निषेध्यसमर्पकतयैकवाक्यतयैव प्रमाण्यसंभवेन वाक्यभेदेन गुणप्रापकता श्रुतीनां न कुत्रापीति रहस्यम्। न च मृडमृदेत्यादेर्न क्त्वासेडिति निषेधनिषेधकत्ववत्प्रकृतेऽपि सगुणवाक्यानामेव निर्गुणश्रुतिबाधकत्वं स्यादिति वाच्यम्, नेतिनेतीति विप्सया प्रसक्तसर्वनिषेधेन विशेषपरिशेषायोगेन तत्रैव प्रकृते पर्युदासाश्रयणायोगात्। न च साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुत्या द्रष्टृत्वादिगुणविधनात्तयैव तन्निषेधासंभव इतिवाच्यम्, अविद्यासिद्धसाक्षित्वानुवादेन द्रष्टृत्वादिविधानासंभवाद्गुणसमर्पकत्वासंभवेन निर्गुणश्रुत्या सर्वधर्मनिषेधसंभवात्। अद्वैतस्य च कुत्राप्युपास्यतया बोधनश्रुत्यभावेन सर्वधर्मनिषेधोपपत्तौ बाधकाभावात्।

## उपास्तिश्रुतिविषयविवेचनम्।

न चात्मेत्येवोपासीतेत्यत्राद्वैतस्यैवोपास्यत्वकथनेन तस्याप्युपासनाशेषतयात्वदुक्ताऽद्वैतत्वासिद्धिरिति वाच्यम्. अनेन ह्येतत्सर्वं वेदेत्युत्तरवाक्यस्थविदिसमानार्थकतयोपास्तिशब्दस्य क्रियावाचकत्वाभावात्। आनन्दादयः प्रधानस्येति सूत्रमपि लक्ष्याखंडवाक्यार्थसिद्धये वाच्यवाक्यार्थोपसंहारं गोचरयति नतूपासनार्थं गुणोपसंहारमिति निर्विशेषोपासनाऽसंभवेनोत्तरतापनीयादावुक्तनिर्गुणोपासनायाज्ञानपरत्वमे-

---

टि०–'अतिरात्रे षोडशिनंगृह्णाति, नातिरात्रेषोड्शिनंगृह्णाति। अत्रग्रहणाग्रहणक वाक्ययोः परापरयागविषयत्वेन सन्दिह्य 'ऐन्द्रवायंवगृह्णाति, इतिवत् ग्रहणकवाक्यस्ययागपरत्वेऽप्यग्रहणकवाक्यस्य यथा नतत्परत्वं तथा सगुणवाक्यानापिनतुरीयब्रह्मपरत्वम्।

वावगन्तव्यम् । उपासनार्थं सत्यकामादिगुणोपदेशे सति सत्यकामादिगुणके ईश्वरत्व-सिद्धिवत् व्यतिहारसूत्रभाष्यपर्यालोचनयैक्यवत्सत्यगुणत्वादिकमपि सिद्ध्यतीत्यप्य-वोधविजृंभणमेव, यतस्तत्र निर्गुणश्रुत्यनुसारेणातद्गुणबहुव्रीह्याश्रयणीतया सगुणो यः स ईश्वर इत्यर्थप्रसिद्ध्या तदैक्यसिद्धावीश्वरस्य निदर्शनत्वं न तु गुणस्येत्यत्र तात्पर्यम् । एवञ्चापहतपाप्मत्वादिकानां न तथा प्रवेशः संभवति, बलाबलन्यायेन स्वरूपबोधकानन्दापहतपाप्मत्वादयस्तात्त्विकाः सत्यकामत्वादयस्त्वतात्त्विकाः इत्य-र्थनिर्णयात् । यदि स्वाभाविकीज्ञानबलक्रिया च, किमात्मको भगवान् ज्ञाना-त्मको भगवान्बलात्मको भगवान् इत्यादिश्रुत्याज्ञानबलादीनां भगवदात्मकत्वमभ्यु-पैषि तदा न नो विद्वेषः, मयापि ब्रह्मभिन्नगुणादिमत्त्वस्यैवानंगीकारात्. अभेदे गुणगुणिभावस्यासंभवाच्च । एवञ्च यत्र ब्रह्मप्रकरणे गुणोक्तिः सोपासनार्थं व्याव-हारिकगुणकथनपरा । न च सगुणोपासनं श्रुतिप्रतिपाद्यचरमब्रह्मपरम् ,। सगु-णोपासनानामवान्तरतत्तल्लोकप्राप्तिरूपफलान्तरश्रवणात् । न च ब्रह्मजिज्ञासवे तत्तल्लोकादिप्रापकसगुणोपासनोपदेशोनर्थक इति वाच्यम् , अरुन्धतीदिदर्शयिषया-स्थूलनक्षत्रदर्शनन्यायेन, शाखाचन्द्रन्यायेन वा मध्यमाधिकारिणमुद्दिश्य तथा विधानात्. तदुक्तमधस्तात्–निर्विशेषं परंब्रह्मेत्यादि । तथा च श्रुतिः 'यद्वाचा-नभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इत्युपा-सनाविषयस्याब्रह्मत्वमुपपाद्य वागाद्यविषयत्वेन सर्वधर्मशून्यं ब्रह्मोपपादयति ।

## ब्रह्मनिर्गुणत्वे सगुणश्रुत्याक्षेपपरिहारः

न च निर्गुणवाक्यं सगुणवाक्यवद्विनिगमकाभावात्सगुणवाक्यमेव निर्गु-णवाक्यं बाधतामिति वाच्यम् , [1]अपच्छेदन्यायेन पूर्वप्रवृत्तसगुवाक्यस्योदीच्यनिर्गु-

---

१ टि०–ज्योतिष्टोमे "यद्युद्गातापच्छिद्येतादक्षिणो यज्ञः संस्थाप्यः, यदिप्रतिहर्ताऽ यच्छिद्येत सर्वस्वंदद्यात् " इतिश्रुतम् । अयमाशयः–प्रातःसवने बहिष्पवमा-नेनस्तोष्यमाणऋत्विजां शालायाबिर्हिर्गमनसमये एकैकः पुरतोगन्तुः कच्छंगृहीत्वैव पृष्ठतोगच्छेदितिविधिः । तत्र प्रमादादुद्गात्रपच्छेदेऽदक्षिण-यागः, प्रतिहत्रपच्छेदे सर्वस्व दक्षिणयागः 'इति प्रायश्चित्तं भवति तत्रोद्गा-त्रपच्छेदस्यपश्चात्त्वेतन्निमितकप्रायश्चित्तेने भूतपूर्वप्रतिहत्रपच्छेदनिमित्तकप्राय-श्चित्तस्यबाधवत् प्रकृतेऽप्युदीच्यनिर्गुणवाक्येन पूर्वप्रवृत्तसगुणवाक्यस्य-बाध इति ।

णवाक्यबाध्यत्वात्। विधिशास्त्रान्निषेधशास्त्रस्य प्राबल्यनिश्चय एव सगुणश्रुतेर्बा-ध्यत्वे विनिगमकः। अथ श्वेताश्वतरीयषष्ठाध्याये—ज्ञः कालकालो गुणी सर्वविद्यः इत्युपक्रम्य साक्षी चेता केवलो निर्गुणश्चेत्युपादाय स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्य इत्युपसंहृतमित्यत्रोपक्रमोपसंहाराभ्यां मध्यपातिनिर्गुण-वाक्यस्य प्राकृतगुणनिषेधपरत्वमेव समुचितम्। उपक्रमाधिकरणन्यायेन चासञ्जात-विरोधित्वात्. प्रतियोगिसापेक्षविलम्बोपस्थितिनिर्गुणवाक्याल्लिंगाच्छ्रुतेरिव शीघ्रगामि-त्वात्, प्रतियोगिसमर्पकत्वात् पदे जुहोतीतिवद्विशेषविषयत्वाच्च सगुणश्रुतेः प्राबल्य-मितिचेद्वञ्चितोसि श्रुतितात्पर्यज्ञानेन. तत्र न तावत्सगुणपरावुपक्रमोपसंहारौ प्रत्युत निर्गुणपरावेव यतस्तदग्रेऽपि निष्फलं निष्क्रियं शान्तमित्यनेन कलाद्युपलक्षितसर्व-धर्मरहितब्रह्मणः प्रतिपाद्यमानत्वात्. सर्ववित्पदेन मायोपाधिकसर्वज्ञपरब्रह्मणः उक्तेश्च। अन्यथा—सत्त्वप्रधाना प्रकृतिर्मायेति प्रतिपाद्यते। सा माया स्ववशोपाधिः सर्वज्ञेश्वरस्यहि॥ स च ईश्वर इत्युक्तः सर्वज्ञत्वादिभिर्गुणैरित्यादिश्रुतिबाधवज्रलेपापत्तेः। अन्यथासिद्धोपसंहारविषयकोपक्रमणाधिकरणस्यापि प्रकृतेऽभावात्, प्रतियोग्युपस्था-पकत्वप्रयुक्तशीघ्रगामित्वेन सगुणवाक्यस्य प्राबल्ये ग्रहणकवाक्यस्यापि प्राबल्यापत्तेः। अयमाशयः—निषेधवाक्ये प्रतियोगिज्ञापकतया वाक्यान्तरं नापेक्षते, किन्तु स्वय-मेव प्रतियोगिनमुपस्थापयति। निषेधाधिकरणे प्रतियोगिप्रसञ्जकतयापेक्ष्यमाणमपि ग्रहणकवाक्यमग्रहणकवाक्यस्य सर्वथा प्रामाण्याभावे न हेतुः किन्तु अग्रहणादि-वाक्यस्य पाक्षिकप्रामाण्याभावे हेतुः प्रकृते निर्गुणवाक्ये तु पुरुषार्थ पर्यवसायि-त्वप्रयुक्तप्राबल्येन, वस्तुनि विकल्पासंभवेन च निर्गुणवाक्यस्य सगुणवाक्येन पाक्षिकबाधस्याप्यभावान्निर्गुणवाक्यानुगुणतयैव सगुणवाक्यं नीयत इति समक्ष-स्यप्रामाण्याभावेन तेनैतस्य न बाधो ऽपित्वनेनैव तस्य बाध इति।

## अनुमानतोऽपि ब्रह्मनिर्गुणत्वसिद्धिः।

एतेन यद्व्यतिरिक्तेऽसमीहितप्रसक्तिस्तन्मानयोग्यमिति सामान्यप्रसिद्ध्याऽनु-भूतिर्निर्विशेषा, अनुभूतित्वाद्यन्नैवं तन्नैवं यथा घट इत्यनुमानमपि व्याख्यातम्। न च ब्रह्म धर्मिसमानसत्ताकधर्मवत्पदार्थत्वात् घटादिवदित्यनुमानेन सत्प्रतिपक्ष इति वाच्यम्, धर्मिपदस्य यत्किञ्चिद्धर्मियत्किञ्चित्सम्बन्धिपरत्वे साध्याप्रसिद्धेः शुद्धस्य पक्षत्वे हेत्वसिद्धेः, उपहितस्य तत्त्वे अर्थान्तराच्च। विशेषत्वमभावमात्रप्रतियोगि-

तावच्छेदकम्, अभावप्रतियोगिमात्रवृत्तित्वात्, घटत्ववदिति विशिष्यापि विशेषा सिद्धया निर्गुणं परं ब्रह्म इति सिद्धम्। एतेन निराकारत्वमपि व्याख्यातम्। अशरीरं शरीरेष्वनवस्थेष्ववस्थितमित्यादिश्रुतेः।

## विग्रहबोधकश्रुत्यादिविषयविवेचनम्।

ननु 'आदित्यवर्णं तमसः परस्तात्, यदा पश्यः पश्यते रुक्मवर्णं, पुरुषं कृष्ण पिंगलम्, विश्वतश्चक्षुरुतविश्वतस्पात्, सहस्रशीर्षा'इत्यादिश्रुत्या, पश्य मे पार्थरूपाणि, सर्वतः पाणिपादमित्यादिस्मृत्या च सविग्रहं ब्रह्मावगतं भवतीति चेन्न, अविद्याविलक्षणस्वप्रकाशस्वरूपप्रतिपादनत्वेनोपासनपरतया चोपपत्तेः। 'हिरण्मयः पुरुषो दृश्यते', इति दृश्यमानत्वोक्तिरपि प्रतीकोपासने उपास्य साक्षात्कारानियमेपि संपदुपासने साक्षात्कारस्य नियतत्वेन सगुणोपासनेपि उपपद्यते। विश्वात्मकचक्षुः पाणिपादादिकथनमपि ब्रह्मणः सर्वात्मतयान्तर्यामितया च नियम्य जीवावयवमादाय संगच्छते। अन्यथा—त्वन्मतेपि सर्वतः पाणिपादादिसंपादनासंभवेनागत्या मदुक्तरीत्यैव वक्तव्यत्वात्। किञ्च परमात्मकर्मार्जितं परकर्मार्जितं वा विग्रहं भौतिकं मायिकं वा,अङ्गीकरोषि, नाद्यः भौतिकत्वे संसारित्वापत्तेः। न द्वितीयः इष्टापतेः तस्य च ब्रह्मरूपत्वेऽस्मदिष्टम्, तद्भिन्नत्वे तस्यसत्यत्वे नेतिनेतीत्यादिश्रुत्यादिविरोधः, 'तदपाणिपाद' इत्यादिश्रुतिविरोधश्च स्यात्। न च प्राकृतपाणिपादनिषेधपरतयोक्तश्रुतीनामुपपत्तिरिति वाच्यम्, संकोचकप्रमाणाभावात्। विग्रहपरश्रुतीनां दुर्बलतयोपास्यपरत्वेन सर्वसमन्वयसंभवाच। एवञ्च एकोनारायण आसीत् न ब्रह्मा न च शंकरः' इति श्रुत्यापि नारायणशब्दस्य सदेव सौम्येदमग्र आसीदिति श्रुतिः संसारमहाप्रलये मायोपहितब्रह्मस्थितिपरत्वेन नित्यविग्रहपरत्वोक्तिः परेषामसंगतैव। भगवद्विग्रहो न नित्यः सावयत्वात् घटादिवदित्यनुमानेनापि नित्यविग्रहासिद्धिर्बोध्येति सगुणवाक्यवद्विग्रहवाक्यानामपिदौर्बल्येन निर्विशेषं निराकारं च ब्रह्म सत्यज्ञानानन्दमद्वितीयात्मकं नित्यं साक्षिस्वरूपम्। सत्यं ज्ञानमनन्तं ब्रह्म, साक्षी चेता केवलो निर्गुणश्चेत्यादिप्रबलतरश्रुतेः।

## सत्यज्ञानादिपदार्थनिरुक्तिः।

तत्रत्रिकालाबाधकरूपत्वं सत्यत्वम्, निरुपाधीष्टरूपत्वमानन्दत्वम्, ज्ञानत्वञ्चार्थप्रकाशात्मकत्वमद्वितीयत्वमपि द्वितीयाभावोपलक्षितस्वरूपत्वम्। उपलक्षण-

श्चाभावः प्रामाणिकोऽप्रामाणिको वेत्युभयथापि न कोपि दोषः। अतिरिक्ताभावानंगीकारेऽनुपलब्धिप्रामाण्यानभ्युपगमादभावत्वप्रकारकज्ञाने तदपेक्षणादनृतादिव्यावृत्तेरपि ब्रह्मस्वरूपस्येष्टत्वाच्च ब्रह्मस्वरूपात्मकेनाभावेन न सद्वितीयत्वापत्तिः। नित्यत्वमप्युभयावधिराहित्यमिति निर्विशेषनिराकारज्ञानात्मकब्रह्मवादपक्षे न कोपि दोषः पदमादधाति, सर्वश्रुतिसम्यक्समन्वयश्चेति विशेषजिज्ञासुभिराकरग्रंथोवगाहनीयः।

## ब्रह्मेश्वरजीवविभागदिग्दर्शनम्।

अथैतत्तत्त्वप्रकाशसंगानन्दचितः स्वाश्रितानाद्यनिर्वचनीयशुद्धसत्त्वप्रधानमायोपाधिकत्वे ईश्वरत्वन्तादृशमलिनसत्त्वप्रधानाविद्योपाधिकत्वे च जीवत्वं चेति, तथा चश्रुतिः-**जीवेशावभासेन करोति माया चाविद्या च स्वयमेव भवतीति** चेति। एकैव मूलप्रकृतिः शुद्धसत्त्वप्राधान्येन, विक्षेपशक्तिप्राधान्येनवा मायाशब्दितेश्वरोपाधिः, मलिनसत्त्वप्राधान्येन, आवरणप्राधान्येन वा अविद्याशब्दोदितासतीजीवोपाधिः, अत एव प्रकृतेरेकत्वेन जीवेश्वरसाधारण्येपीश्वरस्य सर्वज्ञत्वमपरस्याज्ञोहमित्यज्ञानसंबंधानुभवः श्रुत्यनुभवाभ्यां समर्थ्यते। केचित्तु अविद्योपाधिक ईश्वरः, अन्तःकरणोपाधिको जिवः। **उक्तंच-कार्योपाधिरयञ्जीवः** कारणोपाधिरीश्वरः इति वर्णयन्ति। इत्थञ्च मठान्तर्वर्तिघटावच्छिन्नाकाशवत्, जलासयजलगतसूर्यप्रतिविम्बवद्वा सावच्छिन्नप्रतिविम्बवादाभ्यां जीवेश्वरब्रह्मविभाग उपपद्यते।

## चतुष्पाद्ब्रह्मनिरुक्तिः।

माण्डूक्यश्रुतिस्वारस्येन तु चतुष्पाद्ब्रह्मावगतं भवति, तथा हि–घटाच्छिन्नाकाशो घटाकाशः, घटाश्रितजलप्रतिविम्बितो जलाकाशः, घटानवच्छिन्नो महाकाशः, महाकाशमध्यवर्तिमेघमंडलनिष्ठतुषारादिप्रतिविम्बितो मेघाकाशः इत्येकस्याप्याकाशस्य चातुर्विध्यमेवं स्थूलसूक्ष्मदेहद्वयावच्छिन्नं कूटवन्निर्विकारत्वेन स्थितं घटाकाशस्थानीयं कूटस्थचैतन्यम्, कूटस्थे कल्पितघटगतजलस्थानीयान्तःकरणप्रतिविम्बितं जीवचैतन्यम्, अनवच्छिन्नचैतन्यं ब्रह्म, ब्रह्माश्रितमायानिष्ठसर्वप्राणिधीवासनाप्रतिविम्बितचैतन्यमीश्वरइत्येकस्यैव ब्रह्मण उपाधिभेदाच्चातुर्विध्यम्। इयाँस्तु विशेषोयज्जीवेश्वरयोः सोपा-

धिकत्वे समानेऽपीश्वरस्य स्वोपाधिमायाया व्यापकत्वे व्यापकत्वम् , मायागतसत्वरजस्तमसां क्रमशः प्राधान्ये ब्रह्मविष्णुमहेश्वरत्वञ्चेति ।

## औपाधिकजीवाणुत्वादिनिरूक्तिः ।

जीवस्याप्यविद्योपाधिकत्वपक्षे व्यापकत्वमन्तःकरणोपाधिकत्वे चोपाधिभूतान्तःकरणस्यैव परिच्छिन्नत्वेऽणुत्वं न तु स्वत इति रहस्यम् , श्रुतिसूत्रस्मृत्यादिसिद्धम्। अथ श्रुत्या सिद्धोत्क्रान्तिगत्यागत्यन्यथानुपपत्त्य, स्वशब्देन च स्वरूपेणैवाणुत्वं जीवस्य तथा हि—'स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति' 'येवैकेचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति उत्क्रान्तिगत्यागतिक्रियायाः विभुत्वेऽसंभवेन, मध्यमपरिमाणत्वे घटादिवदनित्यत्वापत्त्या 'अणुर्ह्येवैषआत्मा यं वा एते सिनीतः पुण्यं च पापं च, वालग्रशतभागस्य शतधा कल्पितस्य च, 'एषोणुरात्मा चेतसा वेदितव्यः, इत्यादिश्रुतिभ्यः साक्षादणुत्वश्रवणेन च पारिमाण्डल्यो जीवः। 'न च बुद्धेर्गुणेन चात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोपि दृष्ट' इति बुध्युपाधिकत्वेनैवाणुत्वमिति वाच्यम् , उक्तश्रुतौ यथा बुद्धिगुणेन तथात्मगुणेन स्वस्वरूपेणाप्यणुत्वकथनेन बुद्ध्युपाधिकाणुत्वासंभवात्। पादे मे सुखं शिरसि वेदनेत्येककालावच्छेदेन सर्वांगीणसुखदुःखाद्यनुपलब्धिप्रसंग इत्यपि निरस्तम्. मणिद्युमणिप्रदीपादिन्यायेन स्वाश्रयव्यतिरिक्तदेशव्यापिगुणवत्त्वेन सर्वापत्तिनिरासंभवादिति चेन्न, यथाकर्तुर्भोक्तुर्नित्यमुक्तस्यात्मनो बुद्ध्युपाधिनिमित्तकर्तृत्वभोक्तृत्वसंसारित्वादिकं बुद्धिधर्माध्यासवशात्तथाणुत्वमपि बुद्ध्युपाधिकमेव न तु स्वाभाव्यात्। तथा सति स वा एष महानजआत्मा योयं विज्ञानमयः प्राणेषु, आकाशवत्सर्वगतश्च नित्यः। नित्यः सर्वगतः स्थाणुरचलोयं सनातनः इत्यादिश्रुतिस्मृतिव्याकोपप्रसंगात्। न चैतया परमात्मप्रकरणपठितश्रुत्या परमात्मनो महत्त्वं बोध्यते, तस्यैवज्ञेयत्वेन प्रकृतत्वादिति वाच्यम् , आत्मशब्देन विज्ञानमयपदेन प्राणनिष्ठत्वेन च जीवप्रकरणनिश्चयात् , जीवेशयोरभेदेन तज्ज्ञानेनज्ञानसंभवाच्च। यच्चोत्क्रान्त्यादयोणुत्वेनोक्तातेपि श्रुत्योपाधिकत्वेन समर्प्यन्ते, 'कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामि, कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि, स प्राणमसृजत, इति प्राणनिबन्धनोत्क्रान्तेरौपाधिकत्वेसिद्धे गत्यागत्योरपि सोपाधिकत्वमवगन्तव्यम् , सोपाधिकोत्क्रान्तिमतो निरुपाधिकगत्यागत्याद्यसंभवात्।

किञ्च अनेन जीवेनात्मनानुप्रविश्य नामरूपेव्याकरवाणीत्यत्र जीवात्मनोऽनुप्रवेशान्वये नामरूपे करवाणीत्युत्तमपुरुषवचनेन परमात्मन एव व्याकृतनामरूपात्मकजगति जीवभावेनानुप्रवेशावगमात्तस्य विभुत्वे जीवस्यापि विभुत्वमिति अणुत्वं सोपाधिकमेवेति सुतरामवगम्यते। अपि चाव्यापकस्यैवाव्यापकं प्रति गमनागमनादि संभवति न तु व्यापकस्य व्यापकं प्रति, अव्यापकस्य वा व्यापकं प्रति ब्रह्म तु तव मतेपि व्यापकं तत्प्रति मुख्यगमनासंभवेनौपाधिकृतगमनागमनादीति निश्चयः। अन्यथा–बालाग्रशतभागस्य शतधा कल्पितस्य च। जीवोभागः स विज्ञेयः स चानन्त्यायकल्पते इत्यणुत्वमुक्त्वानन्त्यकथनमसमञ्जसमेव स्याद्यद्यौपाधिकमणुत्वं पारमार्थिकमानन्त्यं जीवस्य न स्यात्। यत्र स्वशब्देनाणुत्वमुक्तं तत्रापि दुर्ज्ञेयत्वाभिप्रायेणोपाधिपरत्वेन वाऽवगन्तव्यन्नान्यथा बहुतरश्रुतिस्मृत्यादिविरोधप्रसंगात्। अथवा घटकरकादिसंयोगस्य नभसोऽल्पदेशव्यापित्ववदणुसंयोगस्यापि शरीरावच्छिन्नत्वाभावेन सकलशरीरगतवेदनाद्यनुभवो नस्यादित्यपरोपि दोषो जीवाणुत्वपक्षे।

## जीवाणुत्वे देहव्यापिचैतन्याद्यनुपपत्तिः।

ननूक्तं प्रदीपचन्दनादिप्रकाशगंधादिवत्प्रसरणशीलचैतन्यगुणयोगेन शरीरव्यापि वेदनाद्युपलब्धिरुपपद्यत इति चेन्न. वैषम्यात्. अणोर्निरंशस्य तदसंभवात्। गुणस्यापि गुणिदेशत्वनियमेन, गुणिनमनाश्रित्य गुणोपलब्धौ गुणत्वप्रच्युत्या साश्रितस्यैव गंधस्य प्रसरणाभ्युपगमात्। प्रदीपप्रभाया अनुद्भूतस्पर्शवत्द्रव्यान्तरत्वेन, दृष्टान्तो न घटते, यत्र विप्रकृष्टदेशे गंध उपलभ्यते तत्राप्युनुद्भूतद्रव्याश्रितगंधोपलब्धिरभ्युपगन्तव्या। **उक्तश्च व्यासपादेनापि** उपलभ्याप्सु चेद्गंधं केचिद्ब्रूयुरनैपुणाः। पृथिव्यामेव तं विद्यादपोवायुञ्च संश्रितमिति। न चैवं द्रव्यप्रक्षयप्रसंगः, द्रव्यान्तरावयवपूरणेन द्रव्यस्वरूपस्थितिनियमात्। अत एव कालपरिपाकवशेन सान्द्रगन्धवदपि द्रव्यं हतगंधं सत् क्वचिदपचीयते क्वचिच्चोपचीयते। प्रकृते च चैतन्यगुणयोगेनाणुरात्मा सकलशरीरगतां वेदनामनुभवतीतिरिक्तं वचः। स्वाभाविकीज्ञानवलक्रिया चेति श्रुत्यात्मनश्चैतन्यस्वरूपत्वेन गुणगुणिविभागासंभवात्। न च त्वन्मतेप्यन्तःकरणोपाधिकात्मनः परिच्छिन्नतया युगपच्छिरःपादादिदेशावच्छिन्नसुखाद्यननुभवो दोषस्तुल्य एव, तथा च 'यत्रोभयोः समो दोषः परिहारोपि तादृश' इति न्यायापात इति वाच्यम्, मन्मतेऽखिल-

शरीरव्यापित्वक्सम्बद्धान्तःकरणाधिष्ठितोपि जीवः स्वाधिष्ठानेन व्यापितया, अन्तःकरणस्य शरीरप्रमाणतया वा सर्वांगीणसुखाद्यनुभवितुं शक्नोति। अणुपक्षे तु यद्देशावच्छेदेन शरीरे स्यात्तत्रैव देशे तदनुभवेन्न सर्वशरीरनिष्ठमिति वैषम्यात्। किञ्चाभिप्रायापर्यालोचनया श्रुत्यक्षरमात्रेणाणुरेव जीवस्त्वयाऽभ्युपगन्तव्यस्तदा परमात्मनोपि तत्सृष्ट्वा तदेवानुप्राविशत्, अन्तः प्रविष्टः शास्ता-जनानाम्, यो मनसि तिष्ठन्मनोन्तरो यं मनो न वेद, गुहां प्रविष्टौ परमे परार्धे' इत्यादिश्रुतिषु प्रवेशादिश्रवणात्, 'अणीयान्व्रीहेर्वा यावाद्वा' इत्यत्र साक्षादणुत्वश्रवणाच्च परस्याप्यणुत्वं तव मतेदुर्वारम्। यदि च 'आकाश वत्सर्वगतश्च नित्यः' ज्यायान्दिवो ज्यायानन्तरिक्षादित्यादिश्रुत्या परस्य सर्वगतत्व सिद्धावणुत्वादिवचनमौपाधिकमुपासनार्थम्वेति मनुषे तदा 'स वा एष महानज आत्मा योयं विज्ञानमयः, अणोरणीयानहमेव तद्वत्। महानहं विश्वमहंविचित्रम्। घटसंवृतमाकाशं नीयमाने घठे यथा। घटो नीयेत नाकाशः तवज्जीवोनभोपमः। इत्यादिश्रुतिषु जीवस्य विभुत्वश्रवणेनौपाधिकाणुत्वाभ्युपगमेनैव सर्वश्रुतिसंगतिः संभाव्यतेऽन्यथान्यतरवाधस्य दुर्वारतापत्तेः। अथास्तु आत्मत्वमणुनिष्ठं द्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वात्पृथिवीत्ववदित्याद्यनुणानमेवाणुत्वसाधकमिति वाच्यम्, पृथिवीत्वादौ व्यापकावृत्तित्वरूपोपाधेः साध्यव्यापकत्वेनात्मत्वादौ साधनाव्यापकत्वेन च सोपाधिकत्वात, जीवो नाणुः प्रत्यक्षत्वादित्यादिश्रुतिमूलानुमानेन प्रतिरोधाच्च परोक्तजीवाणुसाधनप्रत्याशा मृगतृष्णिकायते तस्मात् यथा परमात्मनः सगुणोपासनास्वणीयस्त्वादिव्यपदेशः सोपाधिकस्तथा जीवस्यापि सोपाधिकमेवाणुत्वन्नतु स्वतः।

## जीववादेआभासादित्रिविधपक्षोपपत्तिः।

तत्राविद्योपाधिकत्वपक्षे एकएवजीवोमुख्यः। **तदन्ये जीवाभासाः** कुड्यादिलिखितमनुजशरीरार्पितपटाभासकल्पाः संसारभाजः, अविद्यासंपर्कादेकमेव ब्रह्मानेकत्वेनावभासमानं द्वित्रादिसंख्यायोगिजीवपदवाच्यमंगुलल्यादिसंपर्काच्चन्द्रादिद्वैतावभा**सवदित्याभासवादः, अन्तकरणोपाधिकत्वपक्षे** तु चित्प्रतिबिम्बितस्तदवच्छिन्नो वा जीवस्तत्तदन्तःकरणभेदादसंख्याताः। एतेन सृष्टेः पूर्वमन्तःकरणादेस्त्वयापि सत्त्वानंगीकारेण तत्प्रतिविम्बासंभवात्। शुद्धसत्त्वप्रधानमायायाः

मलिनसत्त्वप्रधानाविद्यायाश्च व्यापितया विवेकासंभवे तत्प्रतिबिम्बितजीवेश्वरयो-रपि विभागासंभवाच्च प्रतिबिम्बपक्षस्य दुरुपादत्तया, त्वन्मतेऽन्तःकरणादेरली-कतया तदवच्छिन्नजीवस्यापि अलीकत्वापत्त्या 'ऋतंपिबन्तौ, द्वासुपर्णा, इत्यादि-श्रुतिसिद्धविभागबाधभियावच्छिन्नवादस्याप्यसंभवसिद्धिकत्वेन, जीवानामाभासत्वेमरु-मरीचिकादितुल्यतयातुच्छत्वापत्त्याच, अंशो ह्ययं परस्य, एषोऽणुरात्मा चेतसा-वेदितव्यः अंशो नानाव्यपदेशात्, ममैवांशो जीवलोके जीवभूतः सनातनः इत्यादिश्रुतिसूत्रस्मृतिप्रामाण्यात् साक्षाद्भगवदंशरूपोऽणुरेवात्मानत्ववच्छिन्नः प्रति-बिम्बः साभासो वा पक्षः श्रेयानिति निरस्तम्। प्रागुक्तरीत्या सोपाधिकत्वे सिद्धे ता दृशोपाधेरगत्याऽविद्यान्तःकरणयोर्मतभेदेनोभयोरन्यतरस्य वा वश्यमंगीकरणीयत्वात्। 'कार्योपाधिरयंजीवः कारणोपाधिरीश्वरः' इतिश्रुतिबलादनादिमायोपाधिकेश्वरसृष्टान्तः करणस्य सृष्टेः पूर्वमसत्त्वेऽपि क्षत्यभावात्। तदलीकत्वन्तु त्वदुक्तदूषणमस्माकं भूषणमेव, ब्रह्मेतरसकलानर्थव्रातस्य श्रुत्या तथात्वनिश्चयात्। न चैवं सादित्वप्रसंगः, संसारचक्रस्यानादित्वेन तस्याप्यनादित्वावगमात्। **अविद्योपाधिकत्वपक्षे** तु 'जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा। अविद्या तच्चितोर्योगः षडस्मा-कमनादयः' इत्यविद्याचित्सम्बन्धस्यानादितया न कुचोद्यावसरोपि। यच्च माया-विद्ययोर्व्यापितया विवेकासंभव उक्तः तत्रेदं चिंतनीयम्, किं समेषां व्यापिनां विवेकासंभवः केषांचिदेव वा, यद्याद्यः पक्षस्तदा आकाशकालदिशामपि परस्पर-विवेको न स्यात्, तद्धेतोरभावात्। न द्वितीयः। नियामकाभावात्। इत्थञ्च यथाकाशकालदिशां स्वभावादेव विवेकस्तथामायाविद्ययोरपि स्वाभाविकभेदेन तत्त-दुपाधिकजीवेश्वरयोः सुतरांविवेक उपपन्नः। वस्तुतस्तु शुद्धसत्त्वमलिनसत्त्वयोर्वि-वेकहेत्वोः सत्त्वे मायाविद्ययोर्विवेको नोपपद्यत इतिरिक्तं वचः।

## जीवांशत्वखण्डनोपपत्तिः।

एवमौपाधिकमणुत्वं विहायांशभावेनाणुत्वमपि दुरुपपादम्। तथा हि—कोय-मंशो व्यापकस्य, अवयवो वा खंडो वा भागो वा, सर्वथापि नोपपद्यते, निरवय-वस्य परमात्मनोऽवयवासंभवात्, संभवे च घटादिवदनित्यत्वापत्तेः। नापि खंडः, महापटस्थानीयस्य स्वरूपप्रच्युतिप्रसंगात् सिद्धान्तेऽखंडब्रह्माभ्युपगच्च। नान्त्यः। कोयं भागो नाम, विद्यमानपदार्थस्य कश्चित्परिच्छिन्नदेशः उत तत्पार्थक्येन तद्व्याप्यः।

नान्त्यः। ब्रह्मातिरिक्तवस्त्वभावेन पार्थक्याभावात्, सर्वाद्वैतस्य प्रतिपिपादयिषितत्वात्। नापि प्रथमः। परिच्छेदकं विना परिच्छेदाभवात्। इत्थञ्च विद्यमानमहापृथिव्याः तत्तद्ग्रामसीमापरिच्छिन्नप्रदेशस्य तत्तद्ग्रामत्वेन व्यवहारवत् घटपरिच्छिन्नचैतन्यस्य जीवत्वं न तु मुख्योंशः संभवति। **उक्तं च श्रीमच्छंकरभगवत्पादैरपि**— "अंश इवांशो न हि निरवयवस्य मुख्योंशः संभवति। कस्मात्पुनर्निरवयवत्वात्स एव न भवती"ति।

## प्रतिबिम्बत्वोपपत्त्यांशत्वखण्डनम्।

अत एव यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥ 'अत एव चोपमा सूर्यकादिवत्' 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादप्येवम्' इत्यादि श्रुतिसूत्रैरौपाधिकविशेषवत्त्वमभिधायैकरूपमपि सद्ब्रह्मप्रतिबिम्बभावेन देहाद्युपाध्यन्तर्भावाद्धानवृद्धिह्रासाद्युपाधिधर्मभागिव भवति न तु तत्तात्विकमित्युपपादितम्। अथोक्तश्रुतिः परस्य विस्फुलिंगादिरूपेणांशभावेन नानात्वदृष्टान्तार्था न तु बिम्बप्रतिबिम्बभावार्था, तथाहि—यथा चन्द्रमा जलेंशुरूपेणांशेन वैविध्यमापन्नः कंपादिविशिष्टःसन्नपि चन्द्ररूपेण त्वेकधैव तथा एक एव भूतात्मा विशेषरूपेणांशेन भूते भूते प्रतिशरीरमेकरूपेण व्यवस्थितोपि स्वस्वरूपेणत्वेकधैवेति चेन्निरंकुशकल्पकस्य तव को निवारयिता. 'रूपं रूपं प्रतिरूपोबभूव तदस्य रूपं प्रतिचक्षणाय' स एष इह प्रविष्ट आनखाग्रेभ्यः 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतिस्वारस्येन तु निर्विवादं बिम्बप्रतिबिम्बभावसामञ्जस्यम्। अन्यच्चापि 'तन्नित्यमुक्तमविक्रियं सत्यज्ञानानन्दं परिपूर्णं सनातनमेकमेवाद्वितीयंब्रह्म। तस्मिन्मरुशुक्तिकास्थाणुस्फटिकादौ जलरौप्यपुरुषरेखादिवल्लो**हितशुक्लकृष्णगुणमयी गुणसाम्यानिर्वाच्या मूलप्रकृतिरासीत्**। तत्प्रतिबिम्बितं यत्तदीश्वरचैतन्यमासीत्'। 'ईशाधिष्ठितावरणशक्तितो रजोद्रिक्ता महदाख्या विक्षेपशक्तिरासीत्, तत्प्रतिबिम्बितं यत्तद्धिरण्यगर्भचैतन्यमासीत्'। सर्वज्ञेशोमायालेशसमन्वितो व्यष्टिदेहं प्रविश्य तया मोहितो जीवत्वमगमत्' तदग्रेच 'अन्तःकरणप्रतिबिम्बितचैतन्यं यत्तदेवावस्थात्रयभाग्भवति'। इति पैंगलर्षिणा परमरहस्यं पृष्टः परमतत्त्वज्ञो याज्ञवल्क्य एकस्यैव

ब्रह्मणोबिम्बप्रतिबिम्बभावेन चातुर्विध्यमुक्त्वा तत एव जगदुत्पत्तिस्थितिलय-व्यवस्थां प्रावोचीति' यथा ह्ययं ज्योतिरात्मा' 'एक एव हि भूतात्मेति' पूर्वोक्त-मंत्राभ्यां बिम्बप्रतिबिंबभावस्य समर्थनात् परोक्तमुख्यांशभावेनाणुवादो विद्वद्भिर-नादरणीय. ।

## निरूपस्यापिप्रतिबिम्बभावोपपत्तिः ।

ननु रूपवतश्चन्द्रसूर्यमुखादीनां जलादर्शादौ रूपवत्येव प्रतिबिंबदर्शनेन त्वन्मते नीरूपस्य परस्याविद्यान्तःकरणादौ प्रतिबिम्बः कथमिति चेच्छृणु नीरूपस्य गगनस्य जलादौ नीलं नभः इतिप्रतिबिम्बदर्शनेन ध्वनौ वर्णादिप्रति-बिम्बदर्शनेन च रूपवतो रूपवत्येव प्रतिबिम्ब इति त्वत्सिद्धान्तस्य व्यभिचारात। नचगगनस्यपञ्चीकरणप्रक्रियया रूपवत्त्वेन, ध्वनावपि वर्णगतोदात्तादिधर्मास्यारोपणे-वोपपत्तौ व्यभिचाराभाव इति वाच्यम्. रूपसंख्यापरिमाणादेर्नीरूपस्य प्रतिबिम्ब-दर्शनात्। न च द्रव्यत्वे सतीति विशेषणीयम्, सिद्धान्ते द्रव्यगुणादिपरिभाषाया अनभ्युपगमात्। अभ्युपगमे वा मलिनदर्पणे मुखवृत्तिगौररूपप्रतिबिम्बादर्शनेन मलिनमुखप्रतिबिंबदर्शनेन चोपाधिरूपस्यैव प्रतिबिम्बरूपप्रयोजकत्वनिश्चयेन प्रति-बिंबे बिंबरूपानपेक्षणात्. चाक्षुषप्रतिबिंबस्यैव रूपसापेक्षत्वनियमेन ब्रह्मप्रतिबिं-बस्याचाक्षुषत्वेन रूपानपेक्षणाच्च। नन्वस्तु प्रतिबिंबे बिंबरूपानपेक्षा, तथापि रूपरहिते प्रतिबिम्बासंभवेन नीरूपाविद्यादौ प्रतिबिंबासंभवः सुस्थिरएवेति चेन्मै-वम्, नीरूपकालस्य प्रत्यक्षत्ववत नीरूपब्रह्मप्रतिबिंबएवास्माकमादरो न तु नीरूप एव, मायाविद्यान्तःकरणनां रूपवत्त्वनिश्चयात्, तथा हि—अथाप्यस्यारूपस्यब्रह्मण-स्त्रीणि रूपाणि भवन्ति सकलं निष्कलंसकलनिष्कलश्चेति यत्सत्यं विज्ञानमानन्दं निष्क्रियं निरंजनं सर्वगतं सुसूक्ष्मंसर्वतोमुखमनिर्देश्यममृतमस्ति, तदिदं निष्कलं रूपम्। अथास्य या सहजाऽस्त्यविद्या मूलप्रकृतिर्मायालोहित शुक्लकृष्णा तया सहायवान् देवः कृष्णपिंगलो महेश्वरईष्टे, तदिदमस्य सकलनिष्कलं रूपम्, इत्यादिश्रुत्यारूपस्यौपाधिककत्वनिरूपणेनरूपवत्त्वमविद्यायाश्च **लोहितशुक्ल-कृष्णरूपत्वमिति** सर्वदोषाशंकाकलंकपंकमार्जनेन अरूपस्यब्रह्मणो मलिनसत्त्वप्रधाना-विद्यायांप्रतिबिम्बसमर्थनात्। अन्तःकरणप्रतिबिंबपक्षेऽपि भूतसत्त्वांशभागत्रयसम-ष्टितः सृष्टान्तःकरणे तत्प्रतिबिम्बः शक्यसमर्थन इति। अवच्छेदपक्षे तूक्तदोषले-शोपि नास्ति 'घटसंवृतमाकाशं नीयमाने घटे यथा। घटो नीयेत नाकाशं तद्व-

ज्जीवोनभोपमः' 'अंशोनाना व्यपदेशात्' वृद्धिह्रासभाक्तमित्यादिश्रुतिसूत्राभ्यामवच्छेदपक्षसमर्थनादाचार्यनिर्भरात्परोक्तदूषणानास्कन्दनाच्चायमेव पक्षः श्रेयान् प्रतिभाति ।

## ब्रह्मभिन्नस्य मिथ्यात्वोपपत्तिः ।

न केवलमुपाधिभेदादाविद्यकं ब्रह्म चातुर्विध्यमपि त्वविद्यावशादखिलं जगदपि तदज्ञानकल्पितं रज्जुसर्पकल्पं स्वसत्ताकालमनेकविधभेदमापन्नं रज्जुज्ञानात्सर्पभ्रमनिवृत्त्या रज्जुमात्रमात्रत्वत्तत्त्वज्ञानात्सविलासाज्ञाननिवृत्तिपूर्वकनिखिलजगन्निवृत्त्या सच्चिदानन्दं शुद्धबुद्धमुक्तस्वभावं ब्रह्मैवावशिष्यते । घटाकाशमठाकाशौ महाकाशेप्रतिष्ठितौ । एवं मयिचिदाकाशे जीवेशौ परिकल्पितौ ॥ या च प्रागात्मनोमाया यथान्ते च तिरस्कृता । ब्रह्मवादिभिरुद्‌गीता सामायेति विवेकतः । माया तत्कार्यविलयेनेश्वरत्वं न जीवता । ततः शुद्धचिदेवाहं व्योमवन्निरुपाधिकः । जीवेश्वरादिरूपेण चेतनाऽचेतनात्मकम् । ईक्षणादिप्रवेशान्ता सृष्टिरीशेनकल्पिता ॥ जाग्रदाविमोक्षान्तः संसारो जीवकल्पितः ।' इत्यादिवराहश्रुत्या जीवाज्ञानकल्पितब्रह्मादिस्तंवपर्यन्तविविधभेदभिन्नजगतो मिथ्यात्वावगमेन सुतरामद्वैतं ब्रह्मैवसत्यमिवगम्यते ।

## प्रत्यक्षादिभिरज्ञान ( अविद्या ) स्वरूपनिरुक्तिः ।

**अज्ञानं** च सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपमनादि यत्किञ्चित्स्वरूपं साक्षिवेद्यम् । न च तत्र प्रमाणाभावः, अहमज्ञो मामन्यञ्च न जानामि त्वदुक्तमर्थं न जानामीति सामान्यविशेषप्रत्यक्षस्य, गाढं मूढोऽहमस्वाप्सं न किञ्चिदवेदिषमित्यादिसुप्तोत्थितपरामर्शस्याऽपि प्रमाणसद्भावात् । शुद्धचैतन्याश्रिताज्ञानस्याहमर्थस्वरूपान्तः करणानाश्रितत्वेपि अधिष्ठानतासंबंधेनाज्ञानान्तः करणयोश्चैतन्ये वृत्तितया तन्निष्ठाधिकरणतानिरूपितवृत्तित्वस्योभयत्र सत्त्वेन, ज्ञानाधिष्ठितचैतन्येऽन्तःकरणतादात्म्याध्यासेन वा एकाश्रयत्वसंबंधेनाहंपदार्थे प्रकारविधयाज्ञानभाने सति अहमज्ञ इतिप्रत्यक्षसामानाधिकरण्यमुपपद्यतेतराम् । ननु मयि ज्ञानं नास्तीतिवदस्याज्ञानस्य ज्ञानाभावविषयत्वमिति चेन्न दृष्टान्तासंप्रतिपत्तेः । तथा हि—घटाभाववद्‌भूतलमित्यत्र यथाऽभावज्ञानात्प्राग्घटत्वावच्छिन्नघटप्रतियोगिज्ञानं भूतलज्ञानञ्च पेक्षितं तथा मयिज्ञानं नास्तीत्यत्रापि, ज्ञानत्वावच्छिन्नज्ञानप्रतियोगिज्ञानमस्मत्पदार्थज्ञानञ्च कारणतयापेक्ष्यते. एवं सति ज्ञानसामान्या-

भावविषयकज्ञानस्थले प्रतियोगिरूपज्ञानविषयकज्ञानस्वीकारे यत्किञ्चित्प्रतियोगिसत्त्वे ज्ञानसामान्याभावविषयकज्ञानं न स्यात्। तदस्वीकारे च कारणाभावादेव ज्ञानाभावज्ञानमनुपपन्नमित्यगत्या मयि ज्ञानं नास्तीति प्रतितेर्भावरूपाज्ञानविषयत्त्वमंगीकार्यमित्यश्च सुतरामहमज्ञ इति प्रतीतेर्ज्ञानाभावविषयत्त्वे धर्मिप्रतियोगिज्ञानाज्ञानाभ्यांव्याहतत्वेन वक्ष्यमाणश्रुतिसिद्धभावरूपाऽज्ञानविषयत्वमुपपद्यते।

अथाभावविलक्षणत्वेनापितवाभिमतमज्ञानं नजानामीतिज्ञानाविरोधित्वेनैवावभासते ततश्च व्याघातःतुल्य एव यतो न जानामीति घटकीभूत 'ज्ञा' धात्वर्थो ज्ञानं नञर्थश्च तद्विरोधित्वेन प्रतीयते, तथा च ज्ञानविरोधिपदार्थाधिकरणमहमितिशाब्दबोधो भवति, नञर्थश्च स्वोत्तरवर्तिविरोधिरूपोऽधर्मासुरादिपदे प्रसिद्ध एव। न च मुग्धोस्मीति प्रतितेरज्ञानवानहमित्यर्थः प्रर्यायते, तत्र ज्ञानविरोधित्वेनाज्ञानभानाभाववत्प्रकृतेऽपि स्यादिति वाच्यम्, यतो मोहादिपदस्याप्यज्ञानमेवार्थ, केवलं प्रलयादिपदवन्नञनुल्लेखेपि नञुल्लिखितधीविषयस्याभावस्यप्रतीतेरुभयत्र तुल्यतया, अज्ञानस्य ज्ञानविरोधित्वेनैव प्रामाण्यं सर्ववादिभिरंगीकृततया च विरोधिनिरूपकज्ञानस्य ज्ञानाज्ञानाभ्यां व्याघातः स्यादेवेति चेत्तुच्छम्. अंधस्य गिरिशिखरवर्तिदुर्वाप्रवालदर्शनाभिलाषवच्छुल्यादिसिद्धास्मत्प्रक्रियानभिज्ञस्य ते प्रलपनमात्रमेतत्। यतः 'सर्वं वस्तु ज्ञाततयाज्ञाततया वा साक्षिचैतन्यस्य विषय एवेति' विवरणोक्त्याऽज्ञानग्रहे साक्षिचैतन्यापेक्षायामपि विषयगोचरप्रमानपेक्षणात् भावरूपाज्ञानपक्षे न त्वदुक्तव्याहतिः। वृत्तिज्ञानस्य साक्षिवेद्यत्वेऽपि तदभावस्यानुपलब्धिगम्यत्वेन साक्षात्साक्षिवेद्यत्वाभावान्न ज्ञानाभावस्यापि साक्षिमात्रापेक्षत्वेन त्वन्मते व्याघाताभावः। इत्थञ्चाहमज्ञो मामन्यञ्च न जानामीत्यादिप्रत्यक्षं भावरूपाज्ञानविषयमेवेति निर्गलितमवगन्तव्यमन्यथा गत्यभावात्। एवमेव त्वदुक्तमर्थं न जानामीति प्रत्यक्षस्यापि त्वद्वाक्यजन्यज्ञानविषयविषयकाज्ञानवानहमिति भावरूपाज्ञानविषय एव श्रेयान्। ज्ञानाभाववादिमते तु त्वद्वाक्यजन्यज्ञानविषयकज्ञानाभाववानहमित्येवार्थः स्यात्तथा सति त्वद्वाक्यजन्यज्ञानविषयसत्त्वे तादृशविषयत्वविशिष्टविषयविषयकज्ञानाभावो न स्यात्, असत्त्वे कारणाभावेन कार्यं न स्यादिति व्याघातः स्यादेव। अनयैव दिशा एतावन्तं कालं न किंचिदवेदिषम् इतिपरामर्शसिद्धसौषुप्तप्रत्यक्षमपि भावरूपाज्ञानविषयमेवेत्यवगन्तव्यमत्रत्यकुतर्कशंकापंकप्र-

क्षालनमद्वैतसिद्धिपदार्थमहोदधिप्रवेशेनैव विशेषजिज्ञासुभिः कर्तव्यम्। यत्तु विषयत्वेनाश्रयत्वेन चाज्ञानव्यावर्तकत्वेन प्रत्यगर्थावभासने स्वरूपज्ञाननिवर्तनीयमज्ञान न्नावतिष्ठते, तमःप्रकाशवद्विरुद्धस्वभावत्वादुभयोः। अनवभासने चाश्रयानवभासे तदाश्रितत्वेनाश्रयिणोऽवभासः सर्ववादिविरुद्ध इति तन्न, विशदज्ञानस्यैवाज्ञानविरोधित्वेनाविशदाश्रयविषयज्ञानसत्त्वेऽपि अज्ञानानुभवेविरोधाभावात्। न च ज्ञानाभावपक्षेपि तादृशसमाधानसंभवेन व्याघातो न स्यादितिवाच्यम्, व्याघातस्य वैशद्यावैशद्यानपेक्षणात्। प्रतियोगिधर्मिज्ञानमात्रसत्त्वे तदभावज्ञानं न स्यात्, तदसत्त्वे च कारणाभावात् तदभावरूपकार्यज्ञानं नस्यादेवेति ज्ञानभावपक्षे व्याघातध्रौव्यमिया भावरूपाज्ञानविषयमेवोक्तप्रत्यक्षमिति सिद्धम्।

## अज्ञानेऽनुमानप्रमाणम्।

एवं सति भावरूपाविद्यायामधस्तादुक्तविवरणोक्तम् 'विवादपदं प्रमाणज्ञानं स्वप्रागभावातिरिक्तस्वविपयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्. अंधकारेप्रथमोत्पन्नप्रभावत्, इत्यनुमानमपि प्रमाणम्। अत्रत्यपदव्यावृत्तिः पूर्वत एवानुसंधेया। सर्वत्रस्वपदं प्रमाणज्ञानपरम्, तेन तादृश वस्त्वन्तराज्ञानपूर्वकत्वं सिद्धयति। नन्वत्राप्रकाशितार्थप्रकाजकत्वस्त्रीकारे तत्रहेतुसत्त्वेऽज्ञानान्तरासत्त्वेऽनैकान्तिकत्वापत्तिः तत्सत्त्वेऽपसिद्धान्तापत्तिर्वेति चेन्न, अनाद्यविद्याच्छादितनिखिलार्थज्ञानस्याज्ञानपूर्वकत्वमस्माभिरंगीकारात्। प्रमाणज्ञानमात्रस्याज्ञानपूर्वकत्वनियमेन तादृशाज्ञानाच्छादितत्वं सर्वविषयस्योपपद्यतेतराम्। न च कालादिव्यवधाने, विषयान्तरज्ञानप्रतिरोधे वा पुनः प्रमाणवृत्यादिपूर्वविषयकज्ञानस्याज्ञानपूवकत्वन्नैवसिद्धयतीति वाच्यम्. समारूढोभवतास्मन्मार्गो यतः पूर्वज्ञानस्य वस्त्वन्तरपूर्वकत्वमभ्युपगम्योत्तरज्ञाने भवतः पृच्छा जागर्ति। जलस्फालनेन जलगतमालिन्यस्य गमनागमनवत् तत्तद्विषयकप्रमाणज्ञानेन तदीयाज्ञानस्यापसरणं तदभावे च नतद्वारणमित्येकाज्ञानपक्षेपि सर्वज्ञानस्याज्ञानपूर्वकत्वमायातम्. **तदुक्तं कैश्चिद्वि-पश्चिद्भिः**। ज्ञानैकदेशेन नाशो वा, कटवत्संवेष्टनं वा. भीतभटवदपसरणंवा, इति। यावन्ति ज्ञानानि तावन्त्यज्ञानानीति मते तु दोषलेशोपि नास्ति। अत एवावरणाभिभवार्था वृत्तिरिति मतं संगच्छते। न च प्रदीपादिसत्त्वेऽपि ज्ञानानुत्पत्याज्ञानस्यैवार्थप्रकाशकत्वनियमेन च साधनविकलो दृष्टान्त इति वाच्यम्,

दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साधर्म्याभावेन यथा प्रथमोत्पन्नप्रदीपप्रभायास्तमः पूर्वकत्वं तथा स्वप्रकाशज्ञानस्यापि तत्पूर्वकत्वमित्यंशसाम्येन च दृष्टान्तसद्भावात्। एवम् ज्ञानविरोधित्वमनादिभावत्वसमानाधिकरणं, सकलज्ञानविरोधिवृत्तित्वात्द्दृश्यत्ववत। अनाद्यभावविलक्षणत्वं ज्ञानविरोधिवृत्ति, अनाद्यभावविलक्षणमात्रवृत्तित्वात् अभिधेयत्ववदित्याद्यनुमानान्यप्यविद्यासाधकान्यद्वैतसिद्धिकृत्प्रदर्शितानि भवितुमर्हन्ति।

## अविद्यायाजगदुपानत्वगर्भमर्थापत्तिप्रमाणम्।

**अथ परमते** अविद्याया उपादानत्वानंगीकारे भ्रमानुपपत्तिरपि तन्मते दोषः, न च चाक्‌चिक्यादिरेव तज्जनकः, तस्य समानधर्मत्वेन धर्मिसिद्धिनान्तरीयकतयोपादानत्वासंभवात्, संभवे च सिंहोमाणवक इत्यादावपि उग्रत्वादिसमानधर्मस्योपादानत्वसंभवात्, उपादानोपादेययोः पौर्वापर्यनियमस्य भंगापत्तेश्च। न चास्त्वन्तःकरणमेवोपादानमिति वाच्यम्, प्रत्यक्षादिप्रमाणानां स्वस्वविषयैःसह यथायोग्यसम्बन्धरूपव्यापारसापेक्षस्यैव तस्य जनकत्वेन प्रमाणविषये शुक्तिरूप्यादिभ्राजनकत्वात्। अन्तःकरणस्य सादित्वेनानादिभ्रमोपादानानुपपत्तेश्च। अपरिणामित्वेन ब्रह्मापि न तदुपादानमिति तादृसभ्रमान्यथानुपपत्त्या, जीवस्यानवधिकातिशयानन्दानुपपत्त्या चार्थापत्तिरपि तत्र मानं मन्तव्यं भवति। किञ्च जीवब्रह्मैक्यान्यथानुपपत्तिरप्यनिर्वचनीयाऽविद्यायां प्रमाणम्। तत्राऽनिर्वचनीयत्वम् सदसद्भ्यां निरूपयितुमशक्तत्वमितिबोध्यम्।

## अविद्यायाउपादानत्वे श्रुत्यादिप्रमाणम्।

अथोक्तप्रत्यक्षस्यान्यविषयत्वेनाप्युपपत्तिसंभवात्, अनुमानस्य च तर्काप्रतिष्ठितत्वोक्त्या सूत्रकृतैव दूषितत्वात्, अर्थापत्तेरपि तर्कविशेषरूपत्वेनैव गतार्थत्वान्न तादृशाविद्यायां साधीयसी प्रमाणपद्धतिरिवि चेद्धन्त? तदर्थं श्रुतिभगवत्याः शरणमनुसरत, सैव भवतां कुतर्कपंकप्रक्षालने समर्था, तथा हि-'**हिरण्यनिधिं**निहितमक्षेत्रज्ञाउपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दत्यनृतेन प्रत्यूढा' इति श्रुतावनृतशब्देन ब्रह्मज्ञानप्रतिबन्धिकाऽविद्यालक्ष्यते। ऋतं पिबन्तौ इति श्रुत्या 'ऋतं सत्यं तथा धर्मं' इत्यादिस्मृत्या च ऋतशब्दस्य धर्मपरत्वं तद्विरोधानृतशब्दस्य दुष्कर्मपरत्वमिति वाच्यम्, तथा सति य आत्मा अपहतपाप्मेत्यादिश्रुत्याऽत्मनोऽपहतपाप्मत्वादिकथनस्य विरो-

धप्रसंगात्। यत्तु मायापरपर्याया विद्यायाः 'मय' ज्ञाने धात्वर्थानुसारंज्ञानवाचित्वमिति तत्तुच्छम्, घटचेष्टायामितिधातुजन्यघटशब्दस्य चेष्टावाचकत्वाभाववत्प्रकृतेप्यविद्याशब्दस्याज्ञानवाचकत्वान्मायाशब्दस्यापि अज्ञानवाचकत्वमेव, अन्यथा 'न मे बन्धो न मे मुक्तिर्न मे शास्त्रं नमे गुरुः। मायामात्रविकाशत्वान्मायातीतोहमद्वयः' भूयश्चान्ते विश्वमायानिवृत्तिः' मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इत्यादि श्रुतिस्मृत्युदितमायाशब्दवाच्याज्ञानतरणस्य विरोधप्रसंगात्।

**मायावशादेव देवा मोहिता ममतादिभिः।** तस्या माहात्म्यलेशांशं वक्तुंकेनाप्यशक्यते' इति श्रुत्या देवानामपि मोहोत्पादकत्वेन मायाया अज्ञानवाचित्वावगमात्। इत्थञ्चानृतादिशब्दानामर्थान्तरपरत्वे बहुतरश्रुतिविरोधस्य दुष्परिहरत्वे 'मायां तु प्रकृतिं विद्यात्' 'अनृतेन प्रत्यूढा' नीहारेण प्रावृताः' 'तमः आसीत्' 'अजामेकां लोहितशुक्लकृष्णां' 'अविद्यायामन्तरे वर्तमानाः' 'तस्मान्मायामेतां शक्तिं विद्यात्' 'अतिमोहकरी माया मम विष्णोश्चसुव्रत' 'ईश्वरस्य महामाया तदाज्ञावशवर्तिनी' 'सत्त्वप्रधाना प्रकृतिर्मायेति प्रतिपाद्यते' 'भूयश्चान्ते विश्वमायानिवृत्तिः' इत्याद्याः श्रुतयोऽविद्यायां मानत्वेनस्थिता नान्यथाभवितुमर्हन्ति। स्मृतिपुराणेतिहासप्रमाणानि तु विस्तरभिया नेह तन्यते। एतेन मायाविद्ययोरैक्यसिद्धौ परमेश्वरज्ञानशक्तेरेव मायात्वेन विवक्षितार्थासिद्धिरिति निरस्तम्, तथा सति परमेश्वरज्ञानस्य नित्यत्वेनोक्तश्रुतिस्मृतिभ्यां ज्ञाननिवर्त्ये मायाशब्दप्रयोगस्य विरोधापत्तेः। तदेवं लक्षणप्रमाणाभ्यां विवक्षितानादिभावरूपाज्ञानसिद्धिः।

इयमविद्या साक्षिसम्वेद्या राहुवत् स्वावृतप्रकाशप्रकाश्या सदसद्भ्यां निर्वक्तुमशक्या चिन्मात्रनिष्ठा, **तदुक्तम्**-'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः' इति। समष्ट्यभिप्रायेणैकरूपेण, व्यष्ट्यभिप्रायेणानेकरूपेण च व्यवह्रियमाणामावरणविक्षेपशक्तिद्वयसंपन्नामेतामुपादाय सर्वज्ञत्वादिलक्षणं सचैतन्यं लूतावत्स्वप्रधानतया निमित्तं स्वोपाधिप्रधानतयोपादानञ्च भवति जगतः। 'मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः।' माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरतीत्यादि श्रुतेः। तत्रावरणशक्त्यवच्छिन्नस्य तस्य कर्तृत्व, भोक्तृत्व सुखदुःखाहंकारा-

दितुच्छसंसारभावना भवति। विक्षेपशक्त्यवच्छिन्नस्याकाशादिप्रपञ्चोत्पादकत्वञ्च। तस्माद्वा एतस्मादात्मनः आकाशः संभूतः आकाशाद्वायुरिति श्रुतेः। अत एव समर्थितञ्च 'प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुरोधात्' 'आत्मकृतेः परिणामात्' 'योनिश्चहि गीयते' इत्यादिसूत्रैर्जगदभिन्ननिमित्तोपादानरूपकर्तृत्वं ब्रह्मणो व्यासपादैरेव।

## उत्पत्तिक्रमोपपत्तिः

अद्वैतपरमानन्दपरब्रह्मणः मूलकारणाऽव्यक्ताविर्भावो भवति। अव्यक्तान्मूलाविद्याविर्भावः ततः सृज्यमानप्राणिकर्मसहकृतापरिमितानन्तशक्तिविशेषविशिष्टमायासहितः सर्वज्ञत्वादिलक्षणः परमेश्वरो जगत्स्रष्टुं प्रथमं संकल्पयति, 'तदैक्षत बहुस्यां प्रजायेय, सोऽकामयत एकोऽहं बहु स्यां प्रजायेय' इत्यादिश्रुतेः। तमःप्रधानविक्षेपशक्तिमदविद्योपहितचैतन्यादपञ्चीकृतानि शब्दस्पर्शरूपरसगन्धाख्यानि एक द्वि त्रिचतुः पञ्चगुणकान्याकाशादिक्रमेणपञ्चभूतानि जायन्ते। तैश्च सत्त्वगुणोपेतैः पञ्चभूतैर्व्यस्तैः पृथक्पृथक्क्रमेण श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानिपञ्चज्ञानेन्द्रियाणि। एतेभ्य एव मिलितेभ्यः सात्त्विकांशेभ्यो मनोबुद्ध्यहंकारचित्तानि च जायन्ते। संकल्पात्मिकान्तःकरणवृत्तिर्मनः। निश्चयात्मिकान्तःकरणवृत्तिर्बुद्धिः। रजोगुणोपेतैर्व्यस्तैः पंचभूतैः क्रमशः वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि जायन्ते। रजोगुणोपेतपंचभूतैरेव मिलितैः पंचवायवः प्राणापानव्यानोदानसमानाख्या जायन्ते। एवमपञ्चीकृतभूतैः लिंगशरीरमुत्पद्यते। तच्च परापरभेदेन द्विविधम्—परं हिरण्यगर्भलिंगशरीरं महत्तत्वम्, ततो हिरण्यगर्भस्थूलशरीरम्। अपरमस्मदादिलिंगशरीरमहंकारतत्त्वम्। एतत्पर्यन्तं साक्षादीशसृष्टमतःपरमितरद्धिरण्यगर्भद्वारा 'हिरण्यगर्भः समवर्ततताग्रे' 'ब्रह्मा देवानां प्रथमः संबभूव' 'सवै शरीरी प्रथमः सवै पुरुष उच्यते। अदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत'। 'हन्ताहमिमास्तिस्रोदेवताः अनेन जीवेनात्मनानुप्रविश्यनामरूपे व्याकरवाणि' इत्यादिश्रुतेः। तमोगुणोपेतैरपञ्चीकृतभूतैः पञ्चीकृतभूतानि जायन्ते। 'तासां त्रिवृतं त्रिवृतमेकैकांकरवाणि' इति त्रिवृत्करणश्रुतिः पंचीकरणोपलक्षणार्था। 'ब्रह्मभूतात्मनस्तस्मादेतस्माच्छक्तिमिश्रितात्, अपंचीकृतआकाशः संभूतो रज्जुसर्पवत्॥ आकाशाद्वायुसंज्ञस्तु स्पर्शोऽपंचीकृतः पुनः। वायोरग्निस्तथा चाग्नेराप अद्भ्यो वसुंधरा॥ तानि भूतानि सूक्ष्माणि पंचीकृत्येश्वरस्तदा। तेभ्य एव विसृष्टं तद्ब्रह्मांडादि शिवेन ह'

इति कठरुद्रोपनिषच्छ्रुतौ पंचीकरणस्योपनिबद्धतया अप्रमाण्याशंकानवकाशात्। तादृशपंचीकृतभूतेभ्यश्च भूम्यन्तरिक्षस्वराद्यूर्ध्वोर्ध्वलोकसप्तकस्य, अतलवितलाधधोऽधोलोकसप्तकस्य ब्रह्मांडस्य, जरायुजांडजस्वेदजोद्भिज्जाख्यचतुर्विधशरीराणां तत्तद्भोगसाधनभोग्यानाञ्चोत्पत्तिरिति।

## लयक्रमोक्तिः।

एवमुत्पन्नस्य भूतभौतिकजगतः तत्तत्कार्याणां स्वस्वकारणेलयक्रमेण लयः, कारणलयक्रमे तु निरधिष्ठानकार्यस्थितिर्विरुद्धेतिकार्यलयक्रमो युक्तिसंगतः, पुराणानुमोदितश्च तथोक्तं **विष्णुपुराणे**-'जगत्प्रतिष्ठादेवर्षे पृथिव्यप्सु प्रलीयते। ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते॥ वायुश्चलीयते व्योम्नि तच्चाव्यक्ते प्रलीयते।' 'अन्नमयं हि सौम्य मनः आपोमयः प्राणस्तेजोमयी वागिति' श्रुत्येन्द्रियाणां भौतिकत्वेन तल्लयक्रमेणैव लयः सुवचः।

## अध्यारोवापादन्यायेनब्रह्मविवर्तजगन्निरुक्तिः।

इत्थञ्च यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' सच्चत्यच्चाभवत्। निलयनञ्चानिलयनञ्च मूर्तञ्चैवामूर्तञ्च' इदं सर्वं यदयमात्मा' इत्यादिसृष्टिश्रुत्याखिलजगत अध्यारोपन्यायेन जगद्रूपेण परिणममानाविद्याधिष्ठाने ब्रह्मणिशुक्तिरजतादिवत्समारोप्यनिरधिष्ठानस्याधिष्ठेयस्यान्यत्रस्थितिरसंभवीति ब्रह्मण्यपि तस्य नेति नेतीति श्रुतिमूलापवादन्यायेनासत्त्वोपपादने निखिलप्रपञ्चास्याविद्यकत्वेन मिथ्यात्वनिश्चयान्निरस्ताखिलद्वैतविभ्रमं सच्चिदानंदैकरसमखंडब्रह्मावगतं भवति। **तदुक्तं चित्सुखमुनिना** 'संसर्गासंगिसम्यग्धीहेतुता या गिरामियम्। उक्ताखंडार्थता यद्वा प्रातिपदिकार्थता' इति। एतदुक्तं भवति शुक्त्यवच्छिन्नचैतन्यनिष्ठाशुक्तित्वप्रकारिका सविकल्पकज्ञानिवर्त्या तूलाविद्या चाकचिक्यादिसादृश्यदर्शनाहितसरजतसंस्कारागन्तुकदोषसहितेन रजताकारेण परिणमते। तत्राविद्याया उपादानत्वेपि तस्याः स्वावच्छिन्नचैतन्याध्यस्ततया ब्रह्मविवर्तंशुक्तिरजतं तुच्छम् सार्वजनीनम्। कारणसमानसत्ताकः परिणामः। तद्विलक्षणसत्ताकोविवर्तः' एवं प्रकृते चिन्मात्राश्रिता तद्विषया निर्विकल्पक ज्ञाननिवर्त्या वियदाद्युपादानमूलाविद्याप्यनादिप्राग्भवीयजीवसंस्कारसमंवहिता वियदा-

दिजगदाकारेण परिणमते। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्। हेतुनानेन कौंतेय जगद्विपरिवर्तते' इति श्रुतिस्मृतिभ्यामविद्यया ब्रह्मविवर्तजगतः शुक्तिरजतवदाध्यासिकत्वेन मिथ्यात्वं दुर्निवारम्।

## अथ परिणामवादिमतमुपपाद्यतत्खण्डनम्!

अथ 'तदात्मानं स्वयमकुरुत' 'तदैक्षत एकोहं बहु स्यां प्रजायेय' 'तद्भूतयोर्नि परिपश्यन्ति धीराः' इत्यादिश्रुतयो ब्रह्मपरिणामात्मकं जगद्गिरन्ति। उपपद्यते च मृत्सुवर्णकार्याणां घटरुचकादीनां तदात्मकत्वं तत्परिणामतयेति ब्रह्मकार्यजगतोपि ब्रह्मपरिणामित्वेनैव तदात्मकत्वं सुवचम्। न च परिणामित्वे विकारित्वापत्त्या पयसो दधिभावेन विकारे स्वरूपविनाशवत् ब्रह्मस्वरूपविनाशप्रसंग इति वाच्यम्। यथाकाशादेः स्वभावादप्रच्युतस्य वाय्वाऽदिरूपेण परिणामः, यथा वाऽप्रक्षीणस्वरूपान्मनसः कामक्रोधादिरूपेण परिणामः, तथा स्वरूपादप्रच्युतस्याचिन्त्यशक्तिमद्-ब्रह्मणो विक्षेपलक्षणजगद्रूपपरिणामे दोषाभावात्। परास्य शक्तिर्विविधैव श्रूयते इति श्रुतेः। प्रयोगश्च भवति ब्रह्म परिणामार्हं तादृशाचिन्त्यशक्तिमत्त्वात् आकाशादिवदिति चेदुच्यते, किमनपेक्ष्यसाधनं ब्रह्म कृत्स्नं परिणमते किंचिदंशेन वा। नाद्यः। कृत्स्नपरिणामे मृत्सुवर्णादिपिंडानां घटकुण्डलाद्याकारपरिणामे स्वरूपविनाशवद्ब्रह्मणोपि तत्प्रसंगात्। नापि द्वितीयः। तथा सति तस्य सावयवत्वे निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम्' अस्थूलमनणु 'यत्तदद्रेश्यमग्राह्यम्' अपाणिपादो यवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिनिरवयवत्वप्रतिपादिकाः श्रुतयः प्रदुष्येरन्। सावयवत्वेऽनित्यत्वापत्तिश्च घटादिवत्स्यात्।

यत्तूक्तमप्रक्षीणस्वभावस्याकाशादेः वाय्वादिरूपेण, मनसश्च तथाभूतस्यकामक्रोधादिरूपेण परिणामवद्ब्रह्मणोऽपि तथा परिणामेबाधकाभाव इति तत्तुच्छम्. आकाशस्यापि पञ्चीकरणतया सावयवत्वेनाप्रक्षीणस्य तस्यपरिणामाऽसम्भवात्। मनसोऽपि त्रिगुणात्मकस्यकामक्रोधादिधर्मवत्त्वेनैकोगुणः स्वेतरगुणानभिभूय व्यक्तीभवतितदितरगुणाश्चतदाऽभिभूताभवन्तीति न मनसोऽपिकामक्रोधादिरूपेणपरिणामसम्भवः,सम्भवेच स्वकारणाऽपेक्षया स्थूलत्त्वेनाऽनित्यतयाऽप्रक्षीणत्वाऽसम्भवः स्यादेव। दृश्यते च मृत्सुवर्णादेः घटकुण्डलादिरूपेणपरिणामे पूर्वावस्थाह्रासः। नचैवमपि आका-

शादेः यथाकथञ्चिद्वाय्वादिक्रमेण परिणममानेऽपिस्वरूपस्थितिवद् ब्रह्मणोऽपिजगद्रू-मेण परिणामेऽपिस्वरूपस्थितौ बाधकाभाव इतिवाच्यम्, तथासति निरंशस्यतस्या-कृत्स्नपरिणामाऽसम्भवात्, सांशत्वेचाकाशादेरिवानित्यत्वाऽपत्तिर्दुर्वारास्यात्। न च जगद्रूपेण परिणमते स्वरूपेणाऽवतिष्ठते च ब्रह्म तादृशाऽचिन्त्यशक्तिमत्त्वादितिवा-च्यम्, अविद्यातिरिक्ततादृशशक्तेः वक्तुमशक्यत्वात्। आकाशादेरपि ब्रह्माध्य-स्ततया तन्निष्ठाऽकाशत्वादिप्रकारिकाऽविद्याऽनादिसंस्कारसध्रीचीना वाय्वादिक्रमेण परिणमत इति समीचीनः पन्थाः। तत्र स्वाभिन्नकार्यजनकत्वरूपोपादनत्वलक्षणे स्वपदेन ब्रह्माज्ञानयोर्ग्रहणात्, 'सदेव सौम्य, तदेतज्जडं मोहात्मकमिति श्रुतिभ्यां ब्रह्मणः सद्रूपस्याज्ञानजाडयस्य च सन् घटः जडोघटः इतिप्रतीतौ सामानाधिक-रण्यानुभवेनाज्ञानोपादनकतत्तत्परिणामभूतस्यापि घटोपलक्षितजगतः 'ब्रह्मैवेदं सर्वमि'ति श्रुत्या तस्या अपि तदनन्यत्वाभ्युपगमाच्च श्रुतिसिद्धं ब्रह्माभिन्ननिमित्तो-पादानकत्वं साधु सम्पद्यते। एवं सति पूर्वावस्थानाशेनावस्थान्तरप्राप्तिरूपविवर्त-बोधिकाश्च सर्वाः श्रुतयः संगच्छन्ते। अन्यथा मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, अजामेकाम्, इन्द्रो मायाभिः पुरुरूपईयते इत्यादिमायाकारणपर श्रुतीनां बाधस्य दुर्वारतापत्तेः। उक्तञ्च श्रीमच्छंकरभगवत्पादैरपिश्रुतेस्तु शब्द-मूलत्वादिति सूत्रभाष्ये अविद्या कल्पितेन च नामरूपलक्षणेन रूपभेदेन व्यक्ताऽ-व्याकृतात्मकेन तत्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते। पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते। वाचारंभण मात्रत्वाच्चाऽविद्याकल्पितस्य नामरूपभेदस्येति न निरवयवत्वं ब्रह्मणः कुप्यति। तदेवं विवर्तवादे सर्वदोषमार्जनमखिलश्रुत्युपपत्तिश्चेति" एतेनाऽविद्यकजगतः शुक्तिरजता-दिवन्मिथ्यात्वमपिव्याख्यातम्।

## पूर्वपक्षीयलक्षणादिनिरसनपुरस्सरंजगत् मिथ्यात्व-लक्षणादिनिरुक्तिः।

ननु किमिदं मिथ्यात्वम् सद्विलक्षणत्वं वा, सदसद्विलक्षणत्वम्वा, ज्ञाननिव-र्त्यम्वा। नाद्यः। अमिथ्याभूतस्यापि वन्ध्यापुत्रादेः सद्विलक्षणत्वात् मिथ्यात्वापत्तेः। न द्वितीयः। भावनिषेधे चाभावत्वस्य अभावनिषेधेयभावत्वस्य ध्रौव्यनोभयनिषेधस्या-श्रुतत्ववत्सदसद्विलक्षणस्याप्यसंभवात्। नापि तृतीयः। आत्मविशेषगुणानां क्रमोत्पत्ति-

मतामुत्तरज्ञानेन पूर्वज्ञाननिवृत्त्यभ्युपगमेऽपि मिथ्यात्वाभावेनार्थान्तरप्रसंगादितिमिथ्यात्वलक्षणानि खण्ड्या तत्र प्रमाणाभावोऽपिबोध्यः। तथा हि प्रमायाः प्रत्यक्षविषयत्वे विवादाभावप्रसंगात्, अप्रमाप्रत्यक्षस्य विषयसत्त्वाप्रयोजकत्वाच्च न प्रत्यक्षप्रप्रमाणम्। नाप्यनुमानं तत्साधकलिंगाभावात्। अथ चिदन्यन्मिथ्या सत्त्वानधिकरणत्वात्. रज्जुसर्पवदित्यनुमानं मानमिति चेत् तुच्छम्, तव मते शुद्धचितोऽपि सत्त्वानधिकरणत्वाभ्युपगमेन तस्यापि मिथ्यात्वप्रसंगात्। यत्तु अयंघटः एतत्कपालनिष्ठात्यन्ताभावप्रतियोगी दृश्यत्वात्पटवदित्यनुमानं जगन्मिथ्यात्वे उट्टंकितं तदपि तुच्छम्, मनसैवानुद्रष्टव्यम्, दृश्यते त्वग्र्यया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिरित्यादिश्रुत्या परस्यापि दृश्यत्वसमर्थनेन तस्य च श्रुतिप्रामाण्याभ्युपगन्तृभिः कैश्चिदपि मिथ्यात्वानंगीकारेणानैकान्तिकत्वात्। किञ्च दृश्यत्वादिहेतुनाजगन्मिथ्यात्वोपपादने उक्तश्रुत्या ब्रह्मणोपि दृश्यत्वात्सत्त्वानधिकारणत्वाद्वा तवाभिमतप्रपञ्चवदित्यनुमानेन ब्रह्मणोपि मिथ्यात्वापत्त्यामूलमपि ते नष्टमिति महद्धास्यकरम्। तदेवं लिंगाभावान्नानुमानं प्रपञ्चमिथ्यात्वे मानम्। नाप्यागमः।

ननु 'एकमेवाद्वितीयंब्रह्मे'त्यादिश्रुतिर्जगन्मिथ्यात्वे मानमिति चेद्भ्रान्तोसि, यतोऽस्याः श्रुतेः पूर्वापरपर्यालोचनयाद्वितीयोऽयं विद्वानितिवदद्वितीयशब्देनैव तादृशामितशक्तिमत्सजातीयद्वितीयो नास्तीत्यर्थोऽवगम्यते। नेहनानास्तिकिञ्चनेत्यादेश्च जगत्कारणे ब्रह्मणि नानात्वनिषेधपरत्वात् 'मृत्योः स मृत्युमाप्नोतीति श्रुतेरपि भेददर्शननिन्दयाऽभेदप्रतिपत्तिविधिपरत्वेन प्रपञ्चनिषेधे अतात्पर्यात्। किञ्च सदेव सौम्येदमग्र आसीत्' 'प्राणा वै सत्यं तेषामेष सत्यम्' 'अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते 'असत्यमाहुर्जगदेतदज्ञाः, असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्, इत्यादिश्रुतिस्मृतिभ्यां जगतः सत्यत्वाऽवगमात्, असत्यकथनस्य सच्छास्त्रानभिज्ञासुरशास्त्रविषयत्वाच्च मिथ्यात्वे लक्षणप्रमाणयोरभावात् न प्रपञ्चमिथ्यात्वसिद्धिरिति चेदुच्यते—धर्मिन्यूनसत्ताकत्वस्य मिथ्यात्वलक्षणस्य संभवात्। उपपद्यते च, शुक्तिरजतादेरधिष्ठानशुक्तिसत्तातो रजतसत्तायाः न्यूनसत्ताकत्वेनाधिष्ठानभूतशुक्तियाथात्म्यज्ञानाद्रजत ज्ञानस्य मिथ्यात्वं सर्ववादिसिद्धम्। एवं स्वाधिष्ठानब्रह्मज्ञानबाध्यत्वे प्रपञ्चस्य मिथ्यात्वमायातम्। ननु शुक्तिरजतादीनां प्रत्यक्षबाध्यत्वेन मिथ्यात्वेपि सन् घट

इति प्रत्यक्षेणैव घटादेः सत्यत्वात्तस्मै मिथ्यात्वासिद्धिरिति चेन्मैवम्, तत्राधिष्ठानब्रह्मसत्ताया एव प्रत्यक्षविषयत्वेन प्रपञ्चसत्यत्वासंभ[1]वात्। नीरूपस्यापि ब्रह्मणः कालादिवत्प्रत्यक्षविषयत्वस्योपपादितत्त्वात्। न च ब्रह्मसत्तान्यूनसत्त्वस्य जगत्यव्याप्यसिद्धया कथं लक्षणसंगतिरिति वाच्यम्, तादृशश्रुतिप्रमाणस्यवक्ष्यमाणत्वात्। एवं सद्भिन्नत्वं मिथ्यात्वमित्यपि लक्षणं सुसंपादम्, त्रैकालिकनिषेधात्यन्ताभावाप्रतियोगिसद्रूपब्रह्मभिन्नत्वस्य प्रपञ्चमात्रेसत्त्वेन लक्षणसमन्वयोबोध्यः न च बन्ध्यापुत्रादौ[2] व्यभिचारः, तस्य तुच्छत्वनिश्चयात्। सदसद्विलक्षणत्वमपि[3] लक्षणं संभवति। प्रपञ्चे सद्रूपब्रह्मविलक्षणत्वस्य, सर्वैरादिसंप्रतिपन्नस्यवन्ध्यापुत्रादिविलक्षणत्वस्य च सत्त्वेन मिथ्यात्वं सिद्धम्। न च विरुद्धैकनिषेधस्यापरसिद्धिनान्तरीयकत्वम्। विरुद्धैकनिषेधस्यापरसाधकत्वं तत्र भवेद्यत्र निषेध्यतावच्छेदकत्वसुभयवृत्ति न भवेत्। एकत्र विरुद्धगोत्वाश्वत्वयोरेकतरस्य निषेधेऽप्यपरसत्त्वाभाववत्प्रकृतेऽपि सदसद्विलक्षणत्वस्य प्रपञ्चे सिद्धौ बाधकाभावात्। ज्ञाननिवर्त्यत्वमित्यपि लक्षणं सुवचम्। ननूत्तरज्ञाननिवर्त्ये पूर्वज्ञाने व्यभिचारः इति चेदत्र ब्रूमः ज्ञानप्रयुक्तावस्थितिसामान्याभावस्य विवक्षितत्वात्। अवस्थितिश्च द्वेधा भवति। स्वरूपेण कारणात्मना च। कार्यविनाशोपि द्विविधः, तत्राद्यः अधिष्ठानतत्त्वसाक्षात्कारेणोपादानेन सहबाधः। द्वितीयस्तु विद्यमान एवोपादाने विरोधिवृत्त्युत्पत्त्या, दोषनिवृत्त्या वा निवृत्तिरूपः। प्रकृतेत्तूत्तरज्ञानाकारवृत्त्युत्पत्त्या पूर्वज्ञानस्य निवृत्त्याकारणात्मनावस्थानेपि, ब्रह्मज्ञानप्रयुक्तावस्थितिसामान्याभावेन मिथ्यात्वनिश्चयात्। वस्तुतस्तु—स्वाश्रयात्वाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वम्। अभिमतपदञ्चघटादीनां वस्तुतः कपालाद्यधिष्ठानाभावात्। ब्रह्मण एव निखिलजगदधिष्ठानत्वस्य श्रुत्यादिसंमतत्वात्। उक्तञ्च चित्सुखाचार्येण तत्त्वदीपिकायां 'सर्वेषामेव भावानां स्वाश्रयत्वेन संमते। प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता' इति।

---

१–टि०–धर्मीभूत ब्रह्मनिष्ठ पारमार्थिकसत्तातिरिक्तव्यवहारिकसत्ताया न्यूनत्वेन मिथ्यात्वसिद्धेश्चेत्यपिद्रष्टव्यम्.

२–आदिपदादाकाशकुसुमादि ग्राह्यम्, व्यभिचारोऽतिव्याप्तिः

३–तुच्छत्वेऽपि सद्भिन्नत्वमस्त्येवेतिचेदत आह सदसदिति.

## मिथ्यात्वेऽनुमानप्रामाण्योपपत्तिः ।

एवं मिथ्यात्वलक्षणनिरुक्त्यानुमानमपि तत्र मानम्, तथा हि विमतं जगत् प्रतिपन्नोपाधिनिष्ठात्यन्ताभावप्रतियोगि, दृश्यत्वात्, सत्त्वानधिकरणत्वात्, शुक्तिरजतवत् । नन्वेतदनुमानघटकीभूताभावः प्रमाऽप्रमा वा । नाद्यः । तस्य प्रमात्वे तेनैव द्वैतापत्तेः, प्रमाऽभावप्रतियोगिनो भावस्याप्यमिथ्यात्वप्रसंगाच्च । नापि द्वितीयः । शुक्लशंखे पीतत्वभ्रमे पीत एवायं न शुक्ल इति शुक्लत्वनिषेधेपि तस्यामिथ्यात्ववत्प्रकृतेप्यप्रमाभावप्रतियोगित्वेपि प्रपञ्चस्य न मिथ्यात्वमिति चेन्नैवम्–अभावानां प्रमात्वेप्यधिकारणस्वरूपत्वेनाद्वैताव्याघातकत्वात् । नवाऽभावप्रामाण्येपि तत्प्रतियोगिनः प्रामाण्यम् क्वचित्संप्रतिपन्नम् । तथासति प्रामात्मकस्य शुक्तिरजताभावस्य प्रतियोगिनः शुक्तिरजतस्यापि याथार्थ्यप्रसंगात् । न च कैश्चिदपि वादिभिस्तस्य सत्त्वमंगीकृतम् । ननुघटादेः प्रतिभानसमये तस्य सत्त्वं त्वयाप्यंगीकार्यमन्यथा घटोयमिति व्यहारोपि न स्यादेवञ्च तत्प्रतिभानसमये कथं तदभावज्ञानं प्रमाणिकमन्यदास्थतदभावज्ञानेप्यर्थान्तरप्रसंग इति चेदुच्यते– परमार्थिकत्वावच्छिन्नजगत्प्रतियोगिताकाभावस्य ब्रह्मनिष्ठत्वेनाऽदोषात् । जगति परमार्थिकत्वस्याप्यध्यासिकस्यवांगीकारेण तत्सत्त्वासत्त्वाभ्यां व्याघातावतारानवकाशात् ॥

यद्वा त्रिविधसत्ता स्वीक्रियते, **परमार्थिकसत्ता** ब्रह्मणि, **व्यावहारिकसत्ता** जगति, **प्रातिभासिकसत्ता** शुक्तिरजतादौ । तदेवं व्यावहारिकसत्तामादाय घटादिव्यवहारोपपत्तौ, विवक्षिताभावप्रतियोगित्वस्य निखिलप्रपञ्चनिष्ठतया मिथ्यात्वस्य सुवचत्वात् । अथ दृश्यते त्वग्र्यया बुद्ध्या, मनसैवानुद्रष्टव्यमित्यादिश्रुत्या ब्रह्मणोपि दृश्यत्वसमर्थनेन मिथ्यात्वसाधकदृश्यत्वहेतोरनैकान्तिकत्वापत्तिः । न च तत्रश्रुतेरुपहितपरत्वम्, अपि च संराधने प्रत्यक्षानुमानाभ्यामिति सूत्रभाष्ये शुद्धस्यैव दर्शनकर्मताकथनेनोपहितपरत्वासंभवात् ।

एवं सत्त्वानधिकरणत्वेन प्रपञ्चमिथ्यात्वसाधने निर्धर्मकब्रह्मणोपि सत्त्वरूपधर्मानधिकरणत्वेन ब्रह्ममिथ्या सत्त्वानधिकरणत्वात्प्रपञ्चावदित्यनुमानेन शुद्धस्यापि मिथ्यात्वापत्त्याऽनयारीत्यानुमानान्तरस्याप्याभाससाम्येन नानुमानं प्रपञ्चमिथ्यात्वसाधकमिति चेदुच्यते, दृश्यत्वबोधकश्रुतीनामुपहितपरत्वेनानैकान्तिकत्वा-

भावात्। शुद्धस्य दृश्यत्वे, 'न तत्र चक्षुर्गच्छति' ''तदेतदितिमन्यन्तेऽनिर्देश्यं परमं सुखम्' 'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा' 'यत्तदद्रेश्यमि'-त्यादिसर्वविधदर्शनकर्मतानिषेधपरश्रुतीनां बाधभिया दृश्यत्वश्रुतीनामुपहितपरत्व-मवगन्तव्यम्। वृत्तिविशिष्टस्य दृश्यत्वे विशेष्यस्यापि तत्प्रसंग इति चेन्न। विशिष्ट निष्ठा विशेष्येऽनुपपन्ना बुद्धिर्विशेषणमुपसंक्रामतीति न्यायेन विशिष्टनिष्ठदृश्यत्वस्य-विशेषणे गतार्थतया विशेष्ये तदसंभवात्। दण्डीरक्त इति बुद्धौ विशिष्टनिष्ठरक्त-त्वस्य विशेष्येऽसंभवेन दण्डमात्रनिष्ठतया शाब्दबोधोपपत्तेः। विशेष्यतापन्नस्य दृश्य-त्वेपि क्षत्यभावाच्च। न च शुद्धस्य चक्षुराद्यविषयत्वे तत्साक्षात्काराभावेनानिर्मो-क्षत्वापत्त्यावेदान्तविचारवैयर्थ्यापत्तिरिति वाच्यम्, चक्षुराद्यविषयत्वेपि स्वयं चक्षु-रादीनामपि प्रकाशकत्वेन स्वप्रकाशत्वात्। 'तमेव भांतमनुभाति सर्वमिति श्रुतेः। न च स्वप्रकाशत्वेपि तस्य शुद्धं स्वप्रकाशमिति शब्दबोधविषयत्वे दृश्यत्वापत्तिः, अशुद्धत्वामस्वप्रकाशत्वव्यापकमिति लक्षणया स्वप्रकाशत्वोपपत्तेः। तदुक्त **मद्वैत-सिद्धौ**—"शुद्धं स्वप्रकाशमिति वाक्यस्य लक्षणया अशुद्धत्वमप्रकाशत्वव्यापकमित्यर्थः। तथाचाशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशतापर्यवस्यति. यथा भेदनिषेधेनाभिन्नत्व"-मिति। एवं सत्त्वानधिकरणत्वेऽपि ब्रह्मणः सत्स्वरूपत्वेनोक्तव्यभिचारासंभवः, 'अस्तीत्येवोपलब्धव्यः' इति श्रुतेः। तदेवमुक्तदोषाभावादनुमानं जगन्मिथ्यात्वे मानमिति सिद्धम्। तदुक्तम्—'अंशिनः स्वांशगात्यन्ताभावाप्रतियोगिनः अंशित्वा-दितरांशीवदृग्गेपैव गुणादिषु' इति। एवं प्रपंचो मिथ्या ब्रह्मभिन्नत्वाद्यदेवं तदेवं यथा रज्जुसर्पादिरित्याद्यनुमानं मिथ्यात्वसाधकम्।

अथ रज्जुसर्पादिदृष्टांतस्य श्रुतिसंमतत्वे क्वाप्युपन्यस्तो भवेन्नतूपन्यस्त इति दृष्टान्तासिद्धयैव न प्रपञ्चमिथ्यात्वे मानमितिचेदत्रेदं चिन्तनीयम्-किं काश्चि-देवोपानिषदः। प्रमाणं सर्वा वा। यद्याद्यः पक्षः तथा भेदवादिनां महोपनिषत्पर-मोपनिषद्वराहाद्युपनिषन्मतानुसारं भेदादिस्वपक्षसाधनस्य, नारायणाद्युपनिषददव-लम्ब्य भेदाभेदपक्षस्य, गोपालतापनीयाद्युपनिषदा—शुद्धाद्वैतपक्षस्य महोपनिषन्म-तावलंबनेन श्रीमद्बोधायनाचार्यकृतब्रह्मसूत्रवृत्त्या विशिष्टाद्वैतसिद्धान्तस्य च निरालंबना पत्तेः। अथोत्तरः पक्षः तदा रज्जुसर्पादिदृष्टान्तोपि श्रुतौ पर्याप्तमुपलभ्यते तथा हि—अज्ञानमितिचरज्जौ सर्पभ्रान्तिरिवाद्वितीये सर्वानुस्यूते सर्वमये ब्रह्मणि

देवतिर्यङ्नरस्थावरजंगमस्त्रीपुरुषवर्णाश्रमबन्धमोक्षोपाधिनानात्मभेदकल्पनमज्ञानम्' इति निरालंबनश्रुतिः, यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात्। तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः' इति नादबिन्दूपनिषत्। 'सर्पादौ रज्जुसत्तवद्ब्रह्मसत्तैवकेवलम्। प्रपञ्चाधाररूपेण वर्ततेऽतो जगन्नहि। कालत्रये यथा सर्पो रज्जौ नास्ति तथा मयि। अहंकारादिदेहान्तं जगन्नास्त्यहमद्वयः' इत्यात्मप्रबोधोपनिषत्।' मरुभूमौ जगत्सर्वं मरुभूमात्रमेव तत्। जगत्त्रयमिदंसर्वंचिन्मात्रं स्वविचारतः॥ 'लीलया-कल्पयामास चित्राः संकल्पतः प्रजाः 'नानाचारसमारंभाः गंधर्वनगरं यथा'॥ तासां स्वर्गापवर्गार्थं धर्मकामार्थसिद्धये। अनन्तानि विचित्राणि शास्त्राणि समक-ल्पयत्॥ परमार्थेन विप्रेन्द्र मिथ्या सर्वन्तु दृश्यते।...असदेतदितिज्ञात्वा भ्रातृ-भावं निवेशय। गंधर्वनगरस्यार्थे भूषितेऽभूषिते तथा। अविद्यांशेसुतादौ वा कः कामः सुख दुःखयोः' इत्यादिमहोपनिषत्स्वपि रज्जुसर्पगंधर्वनगरादिदृष्टांतानां जगन्मिथ्यात्वे उपन्यासेन प्रकृतानुमानेपि तद्दृष्टांतसद्भावात्। किञ्चरज्जु-सर्पशुक्तिरजतादीनां सर्ववादिसिद्धस्वाधिष्ठानाज्ञानमूलकमिथ्यात्ववत्प्रपञ्चस्यापितन्नया-येनस्वाधिष्ठानाऽज्ञानमूलक सर्वप्रमाणसिद्धमिथ्यात्वे को बाधः। तदेवमुक्ता-नुमानसिद्ध प्रपञ्चमिथ्यात्वमिति।

## अर्थापत्त्यामिथ्यात्वनिरुक्तिः।

किञ्चदृग्दृश्यसंबंधानुपपत्त्यापि प्रपंचमिथ्यात्वसिद्धिः।

नन्विदमप्रयोजकम् दृश्यत्वमिथ्यात्वयोर्व्याप्त्यसिद्ध्या प्रपंचसत्यत्वेऽपि दृश्य-त्वोपपत्तिसंभवादिति चेन्नैवम्, सत्यत्वे दृग्दृश्यसंबंधानुपपत्तेः। तथा हि उभ-यसंमतस्यैव ज्ञानस्य स्वीकृततया प्रपंचे सत्यत्वस्वीकारे 'यस्यामतं तस्य मतं मतं यस्य न वेद सः' इति श्रुत्यातज्ज्ञानासंभवेन प्रपंचमिथ्यात्वस्यावश्यकत्वम्। विषयासंबद्धज्ञानस्यप्रकाशकत्वे च घटज्ञानेन पटस्यापिप्रकाशत्वप्रसंगात्। संबद्धत्वपक्षेऽपि आत्मस्वरूपं ज्ञानमभ्युपैषि तद्गुणम्वा। नाद्यः, अतीताना-गतोत्पत्तिकालीनविषयेण सह संयोगासंभवात्। नापि द्वितीयः। द्रव्ययोरेव संयोग इति मते द्रव्यगुणयोः संयोगस्यानंगीकारपराहतत्वात्। ज्ञानस्यात्मो-पादानकत्वे मनसो निमित्तत्त्वे च गौरवेण मनस उपादानत्वे लाघवाच्च नात्मगुणत्वं तस्य। समवायासिध्या तत्संबंधस्य दूरनिरस्तत्वात्। विषयविषयिभावस्य चैकैक-

निष्ठतयांन्यस्य च संबन्धस्य दुर्निरूपतया दृश्यस्य सत्यत्वे दृग्दृश्यसंबन्धानुपपत्तिरपि प्रपञ्चमिथ्यात्वे मानमिति सिद्धम् ।

## मिथ्यात्वे एकमेवेत्यादिश्रुत्यर्थविचारे विविधविरोधनिरासः

अथैकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चनेत्यादिश्रुतिरपि प्रपंचस्य मिथ्यात्वे मानम् । न चाद्वितीयशब्दः सजातीयद्वितीयनिषेधपर इति वाच्यम्; एकशब्देनैव गतार्थतया तादृशार्थकरणे प्रमाणाभावात् । सजातीयमात्रनिषेधपरत्वे चैक विज्ञानेन सर्वविज्ञानप्रतिज्ञानस्य वाचारंभणशब्दस्यैतदात्म्यमिदं सर्वमित्युपसंहारस्य च बाध प्रसंगात् । एतदुक्तंभवति—एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति अविज्ञातं विज्ञातमिति, दृष्टान्तितं च यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयंमृत्तिकेत्येव सत्यमित्यादि । तत्र मृद्विकारघटशराबादीनांमृदात्मकत्वेनैव तद्ग्रहणेन ग्रहणंनान्यथेति मृद् व्यतितिरेकेणाभावसूचनान्मृदः सत्यत्वोक्तेर्नामधेयस्य विकारोक्तेश्च कारणस्य सत्यत्वं कार्यस्य च मिथ्यात्वावगत्या ब्रह्मकार्यप्रपंचस्यापि मिथ्यात्वेब्रह्मणश्च सत्यत्वे श्रुतितात्पर्यमवधार्यतेऽन्यथैकविज्ञानेनसर्वविज्ञानासंभवप्रसंगात् ।

ननु प्रत्यक्षादिविरोधात् कथमद्वैतब्रह्मावगमः प्रामाणिकः, तथा हि-सर्वसाक्षिकघटपटादिभेदसिद्धौ बाधकाभावः । स्वरूपभेदवादिनं प्रति च प्रत्यक्षं भेदपूर्वकं वस्तु गोचरयति वस्तुग्रहपूर्वकं वा युगद्वेत्यादिविकल्पशंकानवकाशादिति चेन्मैवम्—कश्चायं स्वरूपभेद इति विचारणीयः । यदि घटात्पटो भिन्न इति घटप्रतियोगिकभेदः पटस्वरूपस्तदा घटप्रतियोगिघटितस्वभेदस्य पटस्वरूपत्वेनाद्वैतेपर्यवसानम् । अथ प्रतियोगी भेदस्वरूपे नान्तर्भूतः तदुपलक्षितस्यैव तस्य प्रत्यायकत्वात्तथा च भेदस्य धर्मस्वरूपत्वेपि प्रतियोगिनस्तत्स्वरूपत्वाभावेन नाद्वैतप्रसंग इति चेन्न, तदा धर्मिवदेव भेदोपि न प्रतियोगिनिरूप्यः स्यादिति पादस्फोटचिकित्सायां शिरच्छेद इव सिद्धान्तक्षतिरेव स्वरूपभेदवादिनां स्यात् । किञ्च घटात्मकभेदप्रतियोगित्वमपि भूतलस्वरूपेऽन्तर्भूतञ्चेद्घटस्यापि भूतलेऽन्तर्भावादद्वैत एव पर्यवसानम् । अथ तादृशभेदो न धर्मिस्वरूपः किन्तु तद्धर्मस्तथापि घटविशिष्टभेदप्रतियोगित्वस्य भूतलधर्मत्वेपि घटस्य न तद्धर्मत्वम्, दृष्टञ्च पीतांबरो हरिरित्यादौ स्वामित्वस्य हरिधर्मत्वेपि पीततायास्तद्धर्मत्वमिति विशेषांशस्य भेदस्य भूतलधर्मताया-

भपि तद्विशेषणस्य प्रतियोगित्वस्य घटस्य च न तद्धर्मत्वमिति चेद्धन्त! ये एकं सद्ब्रह्म परमार्थसदवलंब्य सकलभेदजाताद्यपरमार्थप्रत्याख्यानपरास्तान्प्रत्येतद्विविभीषिकासमुन्मेषासंभवात्। अपि च घटोऽनित्यः भावत्वे सति जन्यत्वादित्यादौ भावत्वविशिष्टजन्यत्वस्य घटधर्मत्वे विशेषणीभूतभावत्वस्यापि तद्धर्मत्वेन सर्ववादिस्वीकृततया भेदस्यभूतलधर्मत्वे भेदविशेषणस्य प्रतियोगित्वस्य घटस्य च तद्धर्मत्वसिद्धिरिति धर्मिभेदे प्रत्यक्षप्रमाणाभावाद्धर्मभेदेपि तथैव बोध्यम्। तथा हि—तादृशे धर्मोयदि घटान्योन्याभावस्तदापि सप्रतियोगिकान्योन्याभावस्य पटस्वरूपत्वे तुल्यन्यायेन विश्वप्रतियोगिकान्योन्याभावस्य ब्रह्मस्वरूपत्वेन पुनरद्वैते पर्यवसानम्। अथान्योन्याभावो न धर्मिस्वरूपः किंतु तस्माद्भिन्नस्तद्धर्मरूपः तदापि तस्य भेदस्य भेदान्तरभेद्यत्वेन परापरधावनेऽनवस्थापात एवं वैधर्म्यपृथक्त्वादिरूपस्यापि धर्मस्य दुर्निरूपतया न धर्मभेदे प्रत्यक्षं प्रमाणम्। किञ्च प्रत्यक्षानुमानार्थापत्तिप्रमाणैरपि न भेदसिद्धिः, तथा हि तादृशप्रमाणानां नियतविषयत्वेनान्ततो गत्वा निवृत्तौ सत्यां सर्वविषयाद्वैतश्रुतिः सर्वाद्वैतं बोधयेत्तदुक्तं खंडनकृता 'सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा। निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते' इति।

अथ आत्मेत्येवोपासीत' इत्यादिश्रुतिरेवोपास्योपासकवाच्यवाचकवर्णलिंगपदवाक्यादिद्वैते प्रमाणम्, तस्यापि बाध्यत्वेउपजीव्यविरोधापत्तिः। द्वैतमुपजीव्याद्वैतबोधनादितिदुच्यते तात्त्विकचेद्वैतनिषेधे श्रुतितात्पर्यात्। न तात्त्विकद्वैतमुपजीव्यं यच्चोपजीव्यं व्यावहारिकभेदादिजातं तन्न बाध्यते, इत्थञ्चाविद्यकद्वैतमादाय सर्वलौकिकवैदिकव्यवहारोपपत्तौ अस्मन्मते दोषाभावात्। ननु श्रुतेरप्याविद्यकत्वेन मिथ्यात्वे कथं तस्मात्तात्त्विकाद्वैतसिद्धिः न च कश्चित्स्वप्नोपभुक्तभोजनादिना तृप्तो भवतीति चेन्न, धूलीपटलेपि धूमभ्रमानन्तरं तद्धूमाल्लौकिकयथार्थवन्ह्यनुमितेर्दर्शनात्। स्वप्नोपभुक्तभोजनादेर्मिथ्यात्वेन जाग्रद्दशायां बाध्यत्वेपि तज्ज्ञानस्याबाध्यत्वेन प्रकृतेऽप्यद्वैतज्ञानस्यैव निःश्रेयसप्रदत्वेन श्रुत्यादिद्वैतजातस्यबाध्यत्वेपि च सकलष्टसिद्धेर्निश्चितत्वात्। एवञ्चाद्वैतश्रुतेर्बाधकत्वे निश्चिते न विद्यते द्वैतं यत्रेति बहुव्रीहिसमासाश्रयणादेकाद्वैतावधारणार्थकैवकारैस्त्रिभिः पदैः स्वगतसजातीयविजातीयत्रिविधभेदो निवार्यते। न चाद्वितीय-

पदेनैव त्रिविधभेदनिषेधसंभवे एकावधारणार्थकपदयोर्वैयर्थ्यमितिवाच्यम्. विजातीयापेक्षयाद्वितीयत्वावच्छिन्ननिषेधोऽद्वितीयशब्दार्थः। सजातीयस्वगतनिषेधश्चैकावधारणपदार्थ इति वैयर्थ्याभावात्। **तदुक्तम्**–'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः। वृक्षान्तरात्सजातीयो विजातीयः शिलादितः॥' तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते। एकावधारणाद्वैतप्रतिषेधैस्त्रिभिः क्रमादिति'' स्वगतभेदः नानात्वरूपजीवेश्वरभेदः। द्रव्यत्वादिना सजातीयपृथिव्यादिभेदः गुणादिभिर्विजातीयभेदः इति। तदेवं मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति 'यत्र हि द्वैतमिवभवति तदितरइतरंपश्यति...यत्र तु सर्वमात्मैवाभूत्तत्केनकं पश्येत्' 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वम्' 'अतोऽन्यदार्तम्' 'सदेवसौम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'इदं सर्वं यदयमात्मा' 'नान्योऽतोस्ति द्रष्टा' 'नान्यदतोस्ति द्रष्टुः' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' 'वासुदेवः सर्वमिति' 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' यदादित्यगतं तेजो जगद्भासयतेऽखिलम्' यच्चन्द्रमसियच्चाऽग्नौतत्तेजो विद्धिमामकम्, क्षेत्रज्ञंचापिमां विद्धि सर्वक्षेत्रेषु भारत 'समंसर्वेषु भूतेषु तीष्ठंतं परमेश्वरम्' भोक्तापत्तेरविभागश्चेल्लोकवत्' 'तदनन्यत्वमारंभणशब्दादिभ्यः' 'भावे चोपलब्धेः' सत्त्वाच्चावरस्य' पटवच्चेत्यादिश्रुतिस्मृतिसूत्रेभ्योऽविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तापारमार्थिकसर्वविधद्वैतभेदजातमिथ्यात्वस्य सर्वधर्मबहिर्भूताद्वैतं ब्रह्मैव पारमार्थिकं सदित्यस्य च न केनचित्कथञ्चित्कुत्रचित्कदाचिद्वारयितुं शक्यम्।

## भेदस्यापारमार्थिकत्वनिरूक्ति।

ननु कश्चायं भेदनिषेधः पारमार्थिकोऽपारमार्थिको वा। नाद्यः। पारमार्थिकभेदनिषेधासंभवात्। संभवे चात्मनोपि पारमार्थिकस्यानिषेधापत्तेः। न द्वितीयः। त्वयाऽपारमार्थिकभेदनिषेधेऽपि मन्मते भेदस्य पारमार्थिकत्वेन त्वन्निषेधस्य तदप्रतियोगिकत्वेन मदभ्युपगतभेदसिद्धिरिति चेदुच्यते लोकव्यवहारसिद्धिभेदस्य निषेधविषयत्वेनादोषात्। नचोक्तविकल्पासहत्वं दोषः, एतादृशविकल्पस्य सर्वत्र सुलभत्वेन त्वत्पक्षेपि योजयितुं शक्यते, तथा हि तुल्यन्यायेन पारमार्थिकाभेदनिषेधानुपपत्तेः। अपारमार्थिकस्य निषेधेऽपि मदुक्तपारमार्थिकाभेदनिषेधायोगात्। न चाभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वेन भेदस्य सिद्ध्यसिद्धिभ्यां

व्याघात इति वाच्यम्. अभावज्ञाने प्रतियोगिज्ञानमात्रस्यापेक्षणीयत्वेन तत्प्रमात्त्वाप्रमात्वस्य प्रकृतावनुपयोगात्। अन्यथा स्वाप्निकपदार्थनिषेधासंभवापत्तेः। अथभेदमात्रनिषेधे 'स्वर्गकामो जुहुयादित्यादौ भेदघटितहुतफलोपास्योपासकादि भावोपादनानुपपत्तिः। समुपात्ततन्त्वादिः पटाय न प्रयेतत तन्त्वात्मना पटस्यापि प्राप्तत्वात्। पटस्यासिद्धत्वे विरूद्धधर्माध्यासाद्भेदसिद्धिः स्यादेव। आततायिनमायान्तं हन्यादेवाविचारयन्। इति शास्त्राद्ब्राह्मणहननमपि प्राप्तम्। ब्रह्मणं न हन्यात्, सुरां नपिबेत्, इति श्रुत्याऽततायिहननमपि न स्यात्, सुरानिषेधे क्षीरमपि न पिबेत्। गांदद्यादिति रासभं दद्यात् इत्यपिस्यात्। आततायि, ब्राह्मण, सुरा, क्षीर, गो, रासभादीनामभेदेन भेदसाध्यसर्वविधश्रौतस्मार्तलौकिक वैदिक व्यवहारमात्रविप्लवापत्तिरिति चेन्नैवम्, तन्त्वादीनां सर्वेषां ब्रह्मणाभेदस्य शास्त्रसंमतत्वान्नतु परस्परमपि व्यवहारे। अध्यस्तस्याधिष्ठानेनसहाभेदो नत्वध्यस्तानां विरुद्धानमध्यस्तेनसहेति तात्पर्यतया न लौकिकवैदिक व्यवहारविप्लवो न वा पारमार्थिकभेदसिद्धिः श्रुत्यैव तस्य निषेधादिति।

यत्तु सत्यमेव विश्वमसौ सृजते, 'असत्यमप्रतिष्ठन्ते' इत्यादिश्रुतिस्मृतिभ्यां जगत्सत्यत्वस्य। ऋतं पिबन्तौ, द्वासुपर्णा सयुजासखाया, द्वाविमौपुरुषौलोके इत्यादिश्रुतिस्मृतिभ्यां भेदस्य च तात्विकत्वमिति तत्तुच्छम्—व्यावहारिकसत्यमौपाधिकभेदश्चादायापि निर्दिष्टश्रुतिस्मृतिपामाण्यसंभवे बहुतरश्रुतिस्मृतिसूत्रप्रत्यक्षादिप्रमाणविरोधस्यानुपेक्षणीयत्वात्। वैपरीत्ये प्रामाण्याभावात्, प्रपंचे पारमार्थिकत्वानंगीकारेऽपि व्यावहारिकसत्त्वरूपासद्वैलक्षण्यस्वीकारेणोक्तस्मृत्याऽसुरसिद्धान्तबहिर्भावाच्च, विगलितसर्वद्वैतनिर्विशेषब्रह्मसिद्धान्तः साधीयान्।

किञ्च 'ब्रह्मविद्ब्रह्मैव भवति' 'भूयश्चान्ते विश्वमायानिवृत्तिः' 'तरति शोकमात्मवित्' तथा विद्वान्नामरूपाद्विमुक्तः' 'भिद्यते हृदयग्रंथिः' 'मायामेतां तरंति ते' इत्यादिश्रुतिस्मृत्यवगतज्ञाननिवर्त्यत्वमपि प्रपञ्चमिथ्यात्वप्रयोजकम्। न च नित्यस्यैवनिवृत्तिविरोधित्वेन प्रपंचस्य सत्यत्वेपि निवृत्तिसंभवः दृश्यते च सत्यस्यैव घटादेर्निवृत्तिरिति वाच्यम्। सर्ववाद्यभ्युपगतसत्यस्य निवृत्तेरदर्शनात्। अन्यथा ब्रह्मणोपि कदाचिन्निवृत्तिप्रसंगात्। ब्रह्मवदेव वा प्रपंचस्य सत्यत्वेऽनिवर्त्यापत्तेः। घटादेः सत्यत्वस्य निराकृतत्वाच्च। रज्जुसर्पादेरधिष्ठानप्रमाज्ञाननिवर्त्यस्य मिथ्यात्व-

वन्निखिलविश्वाधिष्ठानब्रह्मज्ञाननिवर्त्यप्रपंचस्यापि निवर्त्यतावच्छेदकं मिथ्यात्वमनिच्छयापि स्वीकार्यमन्यथाननुगमात्। अथ ज्ञानानुपादानकघटज्ञानप्रागभावस्य सत्यस्य घटज्ञानमात्रेण, चरमस्मृत्या संस्कारस्य, घटज्ञानेन पटज्ञानस्य, मन्त्रादिना विषस्य, दानेन धनवस्त्रादेश्च सत्यस्यैव निवृत्तिदर्शनेन ज्ञानमज्ञानस्यैव मिथ्याभूतस्यनिवर्तकमिति नियमस्य व्यभिचारितया श्रुत्यादिज्ञानसाधारणात्मज्ञाननिवर्त्यतावच्छेदकमिथ्यात्वस्य प्रपंचेऽसिद्धिरिति चेदज्ञानविजृंभितमेतत्, तथा हि प्रतिगित्वेनाभावं प्रत्येव निवर्तकत्वं न तु भावं प्रतीति प्रपंचस्य भावरूपत्वेन प्रकृते तदुदाहरणायोगात्। स्मृतेरपि संस्कारफलत्वेन संस्कारनाशकत्वेप्याकाशादिज्ञानस्यात्मज्ञानं प्रतिहेतुत्वाभावाद्धेतुफलभावेन नाश्यनाशकभावासंभवात्। घटज्ञानेनापि न पटज्ञाननिवृत्तिः किन्तु विरोधिवृत्त्युदये पटाकारवृत्त्यभावे तदावरणमात्रम्। ब्रह्मज्ञानप्रयुक्तावस्थितिसामान्याभावरूपनिवृत्तिरित्युक्तमधस्तात्। मन्त्रादिनापि विषादिनिष्ठानिष्टोत्पादनशक्तिप्रतिबन्धः एव क्रियते न तु तन्नाशः। दानस्य च देयवस्तुनाशकत्वे देयविषयविलयभिया स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनस्यैव 'दा' धात्वर्थतया सत्यत्वेपि प्रपंचस्यनिवृत्तिरिति रिक्तं वचः। तस्मादध्यासविषयत्वेन चारोपितरजतस्य शुक्तिसाक्षात्कारान्निवृत्तिवदनाद्यविद्यामाहात्म्यात्सच्चिदानन्दशुद्धात्मस्वरूपाद्वैतब्रह्मापरिज्ञानादधिष्ठानरूपे तस्मिन्नध्यस्तस्य संसारदशायां व्यवहारमात्रसिद्धद्वैतप्रपंचजातस्याधिष्ठानभूतब्रह्मज्ञानत्वेन ज्ञाननिवर्त्यत्वं मिथ्यात्वे प्रमाणमिति सिद्धम्।

## अध्यासनिरुक्तिः।

**अथ कोयमध्यासो** नाम, किमात्मनि देहेन्द्रियाद्यनात्माध्यासः, तादृशानात्मनि वा आत्माध्यासः, उभयथा नोपपद्यते, तथा हि—ज्ञातसामान्यधर्मवदज्ञातविशेषवदधिष्ठानावरणपुरस्सरारोप्याधिष्ठानसादृश्याद्यध्यासप्रयोजकसामग्र्याः, सर्वधर्मविनिर्मुक्तप्रकाशात्मनि जडात्मकदेहेन्द्रियादिसादृश्यस्यचाभावेनात्मन्यनात्माध्यास इति पक्षो न युक्तः। अखिलबन्धजातस्य मिथ्यात्वनिश्चयेनानात्मन्यात्माध्यासोपि न युज्यते, आरोप्यसत्तापेक्षयाधिकसत्ताकस्यैवाधिष्ठानत्वनियमात्। असत्यस्याधिष्ठानत्वे शून्यवादापत्तिः। अनात्मभूतस्य तस्य सत्यत्वे च तदनिवृत्त्याऽनिर्मोक्षप्रसंगो द्वैतापत्तिश्च स्यात्।

किं चात्मन्यध्यासे सत्यनात्मसिद्धौ तत्रात्माध्यासः । अनात्मन्यध्यासे तन्निष्ठदोषसादृश्यादेरात्मनि लाभः तेन च तत्रानात्माध्यास इत्यन्योन्याश्रयोपि दुष्परिहरः । आत्मानात्मनोस्तमः प्रकाशवद्विरुद्धस्वभावयोस्तद्धर्मयोश्चेतरेतरभावानुपपत्तिश्चेति दुर्निरूपोऽध्यासवादः इति चेदत्रोच्यते—अहं कर्ता भोक्ता मनुष्यः कृष्णः काणः, सुखदुःखे प्रियाप्रिये चानुभवामीत्यबाधितसार्वजनीनानुभवस्य प्रमात्वे, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'अयमात्माब्रह्म' 'आत्मापहतपाप्मा' 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः' स यत्तत्रपश्यत्यनन्वागतस्तेन भवति' 'असंगोह्ययं पुरुषः' इत्यादिश्रुतिभ्य आत्मनः कर्तृत्वादिरहितशुद्धपरब्रह्मस्वरूपताप्रदर्शनस्य बाधप्रसंगात्.

'एकमेवाद्वितीयम्' 'मृत्योः स मृत्युमाप्नोतियइहनानेवपश्यति' अथात आदेशो नेति नेति' इत्यादिश्रुतिभ्यएकस्यात्मनः कर्तृकर्मभावानुपपत्तेः । कर्तृत्वादेर्वास्तवत्वेऽनिर्मोक्षप्रसंगाच्च । आनंदमयपरमात्मनोदुःखादिसंश्लेशायोगात्. नित्यज्ञानरूपस्य तस्यैकत्वाच्च, तत्र तादृशकर्तृत्वादिभेदस्यभ्रान्तिपूर्वकत्वनिश्चयेऽद्वितीयात्मनि तादृशानिर्वचनीयकर्तृत्वाद्यनादिभेदाऽध्यासकारणं धर्मिग्राहकमानसिद्धं भावरूपमनिर्वचनीयमज्ञानमेवेति, अनादित्वेनैवोक्ताऽन्योन्याश्रयादिदोषासंश्लेपोपि । 'विद्ययामृतमश्नुते' 'ब्रह्मविद्ब्रह्मैव भवति' 'तमेवविदित्वातिमृत्युमेति' 'द्वे वाव विद्येवेदितव्ये परा चैवापरा च' अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमचक्षुःश्रोत्रमि'त्यादिश्रुतिबोधितविद्यया सविलासाविद्यानिवृत्तौ शुद्धात्मभावापत्तिलक्षणामृतीभावः संपद्यते । तदुक्तं भाष्यकृता—'सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिको लोकव्यवहारः । तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहाराः लौकिका वैदिकाश्च प्रवृत्ताः । सर्वाणिचशास्त्राणि विधिनिषेधपराणि । एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः । अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तयेसर्वे वेदान्ता आरभ्यन्ते' इति ।

## अविद्यानिवृत्त्युपपत्त्या मुक्तिस्वरूपोपपत्तिः ।

ननुकेयमनर्थहेत्वविद्यानिवृत्तिः, किमात्मस्वरूपा तद्भिन्ना वा । नाद्यः । तस्य नित्यसिद्धत्वेन साध्यत्वासंभवात् । नापिद्वितीयः तस्यनित्यत्वेऽद्वैतहानिः । अनित्यत्वे

चाविद्या तत्कार्यान्तरत्वापत्त्या घटकुट्टीप्रभातवृत्तान्तापात इति चेन्न, आद्यपक्षे दोषाभावात्, तथाहि साध्यं द्विविधम्—सादिपदार्थमात्रसाधारणमेकम्, साद्यनादिसाधारणमपरम्, तच्च यस्य येनान्वयव्यतिरेकौ तत्साध्यरूपम्। एवञ्च ज्ञाने सत्यविद्यानिवृत्तिसत्त्वं तदभावे तन्निवृत्त्यभाव इत्यविद्यानिवृत्तेरात्मस्वरूपत्वेपिसाध्यत्वसंभवः।

केचित्तु अविद्यानिवृत्तिरात्मस्वरूपातिरिक्तैवास्तु। किन्तु तस्याः सत्त्वेऽद्वैतहानिः, असत्त्वे ज्ञानसाध्यत्वं न स्यात्, नापि सदसत्स्वरूपा सा विरोधात्, नाप्यनिर्वचनीया, तथात्वे तदुपादानत्वेनाज्ञानस्य मुक्तावप्यनुवृत्त्यापत्त्याऽनिर्मोक्षप्रसंगात्। अनिर्वाच्यत्वे च ज्ञाननिवर्त्यत्वापत्त्या मुक्तिकाले तन्निवर्तकसामग्र्यभावान्निवृत्तिरपि न स्यात्। तस्मादुक्तप्रकारचतुष्टयोत्तीर्णापञ्चमप्रकाराऽविद्यानिवृत्तिरित्याहुः। एतेन परोक्तसप्तधाऽविद्याश्रयाद्यनुपपत्तिदोषोऽपिपरास्तः, अविद्यानिवृत्तेः पञ्चमप्रकारत्वेन सर्वानुपपत्तिपरिहारसौलभ्यात्। वस्तुतस्तु—चरमवृत्त्युपलक्षितस्यात्मनोऽज्ञाननिवृत्तिरूपत्वेनादोषात्। पाठनिवृत्तावपि पाठकानिवृत्तिदर्शनेनोपलक्षणनिवृत्तावपि मुक्तेरनिवृत्तोपपत्त्योपलक्षणसाध्यतयैव मुक्तेः साध्यत्वेपि न क्षतिः। न च तदानीं ब्रह्मणो वृत्तिविषयत्वे तथैव द्वैतापत्तिरितिवाच्यम्। ब्रह्मणो वृत्तिविषयत्वेपि तया वृत्त्या निखिलाज्ञाननिवृत्त्या सकलमलनिवृत्तौ कतकरजोनिवृत्तिवत्तस्या अपि निवृत्त्या द्वैतापत्त्यभावात्। **तदुक्तम्**—फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्। ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता इति। तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्यासहकार्येण नासीदस्ति भविष्यति, इति च। तस्मात्कण्ठगतचामीकरादिवत्प्राप्तप्राप्तिरूपानन्दप्रकाशमुक्तेः स्वरूपतोऽसाध्यत्वेऽपि तदावरकाज्ञाननिवर्तकवृत्तेः साध्यत्वमात्रेण साध्यत्वोपपत्त्याऽज्ञाननिवृतेरात्मरूपत्वे तदाकारवृतिरूपत्वेपि वा मुक्तिस्वरूपोपपत्तिरिति सिद्धम्।

## ॥ अथ कैवल्यसाधनविचारः ॥

**अनेकजन्मार्जितभक्तियोगाद्भवार्णवोल्लंघनतोऽनुलब्धाम्।**
**मुक्तिं परांशान्तिमुपैति जन्तुर्यत्संविदा तं मनसा स्मरामि ॥१॥**

यद्यपि बहुभिराचार्यवरैः स्वस्वसमयानुसारं निःश्रेयसाधिगतये विविधा सरणिः प्रदर्शिता तथापि 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'

'ज्ञानादेव तु कैवल्यम्' 'ऋते ज्ञानान्न मुक्ति'रित्यादिश्रुतिष्वेवकारमाहात्म्यात्साधनान्तर व्यावृत्तिपूर्वकं केवलज्ञानमेव कैवल्यसाधनमिति श्रुतिसंमतं मतम्।

## भक्त्यामुक्तिरितिपूर्वपक्षः।

ननु कथमिदं स्याद्यावच्छ्रुतिसिद्धं भक्तिसाधनं जागर्ति, तथा हि-भजति सोऽमृतो भवति, भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनः कल्पनं तदेव च नैष्कर्म्यम्' भक्त्या मामभिजानातीत्यादिश्रुतिस्मृत्यादिभिर्भक्तेः साधनत्वमभ्युपेयते, तद्भजनं कीदृशमित्याकांक्षायां 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः। स्नेहोभक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा' इति। सा परानुरक्तिरीश्वरे' इति शांडिल्यसूत्रोक्तानुरक्तिरपिस्नेह एव पर्यवसीयते, स्निग्धएवानुरक्त इति प्रयोगोपलंभात्। प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदमिति" प्रेमस्नेहयोः पर्यायत्वेन 'सा त्वस्मिन् परमप्रेमरूपा' इति नारदसूत्रस्याप्यत्रैव निर्भरः। स च स्नेहोनेच्छाविशेषरूपः, विशेषस्य निर्वचनाशक्यत्वात्। अत एव न सुखविषयिणीच्छा स्नेहः, स्वर्गादिकामनायामपि तथात्वप्रसंगात्। पुत्रादिविषयकस्नेहस्यातथात्वेन स्नेहत्वाभावप्रसंगाच्च। नापि ज्ञानविशेषोपि सः, विशेषनिर्वचचनाशक्यत्वस्य तौल्यात्। जानामि स्निह्यामि इत्यनुव्यवसायाभ्यां ज्ञानस्नेहयोर्भेदस्य स्फुटत्वाच्च। उक्तदोषादेव न यत्नोपि। अनुकूलवेदनीयत्वान्न द्वेषः, अलौकिकत्वान्न लौकिकसुखविशेषरूपः। प्रत्यक्षत्वाच्चनादृष्टरूपोपि, तस्मान्मनो धर्मविशेष एव स्नेहापरपर्याया भक्तिरिति पर्यवसितम् तदुक्तम्-**द्रुतस्य भगवद्धर्माद्धारावाहि**कतां गता। सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते' इति।

## भक्तेरसत्वोपपत्तिः।

तस्य क्षणिकत्वे मानाभावात्कालान्तरे तत्कार्यदर्शनाच्च स्थायित्वम्। एवं स्थायित्वेसिद्धे मातुः पुत्रदर्शनादिजन्याभिव्यक्त्युत्कर्षाभ्यां रसत्वञ्च। अत एव- "यशोदाकर्ण्य नामानि कृष्णस्य चरितानि च। शृण्वन्त्यश्रूणि चास्राक्षीत्स्नेहस्नुतपयोधरा" इत्यादौ यथासंभवं मातुर्दुग्धस्रावादिना व्यभिचारिभावस्यापि प्रसिद्धया, किञ्च निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्। पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः 'इति कंठोक्त्यापि भक्ते रसत्वं सिद्धम्। अस्यां वै

श्रूयमाणायां कृष्णे परमपूरुषे। भक्तिरुत्पद्यते पुंसः शोकमोहतमोपहा' इति भक्त्यर्थमेव भागवतसंहिताप्रणयनाद्भागवतरसस्य भक्तिरसत्वमवगतं भवति। तत्र भगवद्विषयकनिरुपधिकायाः संयोगविप्रलंभ्याद्विविधाया अपि रतेरलौकिकत्वेन मुख्यरसत्वं बोध्यम्। रसोवै सः इति श्रुतेर्भगवतोरसरूपत्वेन तद्विषयकरतेरप्य-लौकित्वात्। लौकिकस्योपाधिकृतत्वात्तदाभासत्वम्। श्रवणकीर्तनादिनवविधभक्ते-स्तज्जनकत्वेनतत्रापि भक्तिरसप्रयोगो भाक्त एव। अत एव नारदशांडिल्यसूत्रादौ गौणमुख्यपरापरसाध्यसाधनसात्त्विकराजसतामसादिवाच्या विविधा भक्ति प्रदर्शिता। इत्थं च भगवद्विषयकभक्तिरसस्य लोकसिद्धशृंगाररसातिरेकित्वं निष्प्रत्यूहतया सिद्धम्।

## एकादशभक्तिभूमिकानिदर्शनपुरस्सरन्तस्याऽलौकिकरसत्वोपपत्तिः।

तदेतत्सर्वमभिसंधायैकादशसंख्यकभक्तिभूमिकामाह भक्तिरसायने यथा "**प्रथमं महतां सेवा** तद्दयापात्रता सदा। श्रद्धाथ तेषां धर्मेषु ततो हरिगुणश्रुतिः॥१॥ ततो रत्यंकुरोत्पत्तिः स्वरूपाधिगतिस्ततः। प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः ॥२॥ भगवद्धर्मनिष्ठातः स्वस्मिँस्तद्गुणशालिता। प्रेम्णोथ परमाकाष्ठेत्युदिता भक्ति-भूमिका ॥३॥" इति। तत्र प्रथमचतस्रोभक्तिशोधनभूमिकाः सन्ति। पंचमे भक्ति-स्वरूपं तत्परिपाकतोऽग्रिमभूमिकाया उद्धवश्लोक्तः। षष्ठ आत्मज्ञानम्। सप्तमे साध्यसाधनरूपा साधनरूपा च भक्तिर्दर्शिता। अष्टमे सप्तसाधनभूमिकाया फल-रूपा भूमिका कथिता (इयं ज्ञानिनां चतुर्थभूमिकातुल्येति भक्ता आमनन्ति)। ततस्तिस्रो भूमिका अष्टमभूमिकास्थभक्तस्य क्रमशः शनैः शनैः प्रतिबंधविलय उत्तरोत्तरभूमिकालाभो भवति। (अन्तिम भूमिकाया ज्ञानिनां सप्तमभूमिकासादृश्यं भवितुमर्हति)। ज्ञानभूमिका अग्रे वक्ष्यन्ते। एवञ्च भक्तहृदयगतभगवद्विषयक-परानुरक्तिरेवालौकिकविभावादिभिः परानन्दनित्यविग्रहश्रीभगवद्रसतामेत्य भक्तभग-वतोरेकरसतामावेदयति, सैव रसानुभूतिर्मुक्तिः। **तदुक्तं भक्तिरसायने** श्रीमधु-सूदनेन 'स्थायिभावगिरातोऽसौ वस्तुरूपोऽभिधीयते। व्यक्तश्च रसतामेतिपरान-न्दतया पुनः॥ भगवान्परानंदस्वरूपः स्वयमेवहि। मनोगतस्तदाकारो रसतामेति पुष्कलम्॥' इति। तमेव विदित्वादिश्रुत्युक्तज्ञानस्य परभक्तिसाधनत्वेतात्पर्यमन्यथा 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने

प्रियोऽति मे' इति श्रीभगवद्गीतायां वर्णाश्रमधर्मपालनपूर्वकैकांतिकमद्भक्त्यामामेव प्राप्स्यसील्यर्जुने वात्सल्यातिरेकाद्भगवतस्तथा सत्प्रतिज्ञाया उपरोधपत्तेरिति चेदुच्यते-

## ज्ञानान्मुक्तिरितिसिद्धान्तपक्षः

अस्तु नाम परानुरक्तिस्वरूपाया भक्ते रसस्वरूपत्वं किन्तु ज्ञानसाधनत्वेनैव भक्तेः प्रयोजकत्वनियमेनोक्तश्रुत्यादिसमन्वयसंभवः। तथा हि-तमेवविदित्वातिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनायेत्यादिश्रुतौ तं विदित्वैवेति पर्युदासात्मकैवकारेण, नान्यः पन्था' इत्यन्यसाधनव्यावृत्त्या च ज्ञानस्यैव साक्षात्साधनत्वनिश्चयो भवति। ननुज्ञानस्यापि भक्तिप्रयोजकत्वोपवर्णनेन श्रुतिसमन्वयो भवितुमर्हति तथाचापरविद्ययाऽपराभक्तिस्ततः परविद्यया परा भक्तिस्ततो मुक्तिरित्येवास्तु वैपरीत्येविनिगमकाभावादिति चेन्नैवम्। भक्त्यामामभिजानाति इतिसिद्धान्तस्मृतेरपि विनिगमकत्वात्। अयमाशयः-अपरविद्यया अपरा भक्तिस्ततः परभक्तिस्ततः परविद्ययामुच्यत इति क्रमस्तत्र परया ज्ञानलक्षणया भक्त्यासाकल्येन भगवत्स्वरूपमभिजानाति ततः तत्त्वतः परविद्यया ज्ञात्वा विशते परमानन्दस्वरूपः सन्मुक्तो भवति। तदुक्तं श्रीमच्छंकरभगवत्पादैर्गीताभाष्ये यथा-'ततो ज्ञानलक्षणया भक्त्या मामभिजानाति, यावानहमुपाधिकृतविस्तरभेदो यश्चाहं विध्वस्तसर्वोपाधिभेदोऽभिमत उत्तमपुरुष आकाशकल्पस्तं मामद्वैतं चैतन्यमात्रैकरसमजरममरभयनिधनं तत्त्वतोऽभिजानाति। ततो मामेवं तत्त्वतोज्ञात्वा विशते तदनंतरं मामेव। नात्र ज्ञानान्तरक्रिये भिन्ने विवक्षिते ज्ञात्वा विशते तदनन्तरमिति, किन्तर्हि फलान्तराभावाज्ज्ञानमात्रमेवेति'। एवं सति सगुणब्रह्मण्यन्तःकरणवृत्तिस्थिरीकरणायारुन्धतीदर्शनन्यायेन भक्तेरुपयोगेपि श्रुत्यादिचरमलक्ष्यनिर्गुणब्रह्मलयाख्यमोक्षस्तु परया विद्ययैवेति निर्गलितम्। अत एव 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि भक्तियोगं तं येन मामुपयान्ति ते।' भक्त्या त्वनन्ययाशक्य अहमेवंविधोर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुञ्च परंतप'। इत्यनन्यभक्त्यनन्तरं तादृशज्ञानेनैव ब्रह्मावाप्तिर्भवतीति स्फुटीकृतं भगवता श्रीमद्गीतायाम्। अन्यथा शतशः श्रुतिस्मृत्यादिविरोधो दुष्परिहर एव स्यात्। न चोक्तमपरभक्त्यनन्तरं ज्ञानबोधकं भगद्वाक्यमिति वाच्यम्, उभयत्रानन्येति विशेषणेन परभक्तिपरत्वनिश्चयात्।

तस्मान्मुक्तिसाक्षात्साधनपरविद्यासाधनत्वेन भक्तेः प्रयोक्तत्वेनापि सर्वश्रुत्यादिसामंजस्यमित्यगत्या स्वीकार्यम्। एवं च न पूर्वापरविरोधो न वा भगवत्प्रतिज्ञाभंगोपितु श्रुत्यादयोऽनुगृह्यन्ते।

## भक्त्या श्रुत्यादिसिद्धनिर्गुण तुरीयब्रह्मभावापत्तिरूपमुक्त्यनुपपत्तिः

किंच **भगवद्विषयकान्तःकरणवृत्तिरेव भक्तिरित्युक्तं** भवता, तत्रेदं पृच्छ्यते—किं सा भक्तिः क्रियारूपा वा, ज्ञानरूपा वा, स्मृतिरूपा वा, उपासनारूपा वा, स्नेहापरपर्यायप्रेमरूपा वा. अन्यैव वा,। नाद्यः। क्रियारूपत्वे सा क्रिया पुरुषतंत्रा. वस्तुतंत्रा वा। नाद्यः। पुरुषतंत्रत्वे पुरुषाधीनात्मलाभतया पुरुषभेदेन भक्तेरपिहीनमध्यमोत्तमत्वेन भेदस्य ध्रौव्यात् तादशभक्तिलभ्यकैवल्यमपि सातिशयं भवेदिति स्वर्गादिलोकस्थानामिवमुक्तानामपि तारतम्येन दुःखादिलेशसत्त्वे निरतिशयानन्दानुभवो मोक्ष इति नैव स्यात्। वस्तुतंत्रत्वे फलतो ज्ञानत्वाविशेषात्। तथात्वेपि तव मते विग्रहवत्सगुणभगवतोऽवस्थाविशेषेण तद्विषयकवृत्तेरपि विशेषनैयत्येन सदैकरसब्रह्मसाक्षात्कारो मोक्ष इत्यनुपपत्तेः। न च नित्यधामस्थ पुरुषोत्तमस्यावस्थाविशेषाभावान्नोक्तदोष इति वाच्यम्—'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्तेकृतात्मानः प्रविशन्ति परं पदम्। आब्रह्मभुवनाँल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते। इति श्रुतिस्मृतिभ्यां ब्रह्मलोकोपलक्षितनिखिललोकातीतस्यैव परं पदत्वोपगमात्। तत्तल्लोकस्थसगुणब्रह्मविग्रहस्य सावयवत्वेनानित्यत्वाच्च। मम तु नित्यनिरवयवकूटस्थनिर्गुणब्रह्मणोऽवस्थाविशेषासंभवेन वस्तुतंत्रज्ञानान्मोक्ष इति न कोपि दोषः। ब्रह्मणो निर्गुणत्वमुपपादितमस्माभिरद्वैतविचारे विस्तरभयात्प्रकरणान्तरभयाच्च नेहोपपाद्यते। नापि द्वितीयः। जाने. भजे इत्यनुव्यवसायाभ्यामुभयोर्भेदावगमात्।

न नु चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥ इति निष्कामभक्तेर्ज्ञानानन्यत्वावगम इति चेद्विप्रलब्धोसि। यतो यथार्तित्राणायार्तो, ज्ञानकामो जिज्ञासु, रर्थकामोर्थी च भजन्ते तथा ज्ञानदार्ढ्याय ज्ञानिनोपि मां भजन्ते पौनःपुन्येन मत्स्वरूपानुसंधानं कुर्वत एवं सत्यखंडाकारवृत्त्या ज्ञानोदयोऽविद्यानाशान्मुच्यत इत्याशयेनभक्ति ज्ञानयोर्-

क्याऽसम्भवात्, सम्भवेच साक्षाज्ज्ञानेनैव कैवल्यमित्यनुक्त्वा भक्तेर्ज्ञानरूपत्वं तेन च मुक्तिरिति शिरोवेष्टनेन नासिकास्पर्शतौल्यात्। अपि च भक्तेर्ज्ञानरूपत्वे ज्ञानेनैव मुक्तिरिति मदवलंबनीयः पक्षः त्वयाप्यंगीकृत इति चिरंजीवताद्भवान्। नापि तृतीयः। स्मृतेः संस्कारजन्यत्वनियमेन संस्कारस्यापि पूर्वानुभवसापेक्षत्वमावश्यकम्। स चानुभवः परोक्षोऽपरोक्षो वा। नाद्यः। ध्रुवायाः स्मृतेः प्रत्यक्षस्वरूपत्वं त्वयापि स्वीकृतमिति साक्षात्कारपर्यवसितस्मृतेर्मुक्तिसाधनत्वं प्रमाणयता भवतापि वाचोभंग्या ज्ञानमेव मुक्तिसाधनमित्यभ्युपगमेन घटकुट्टीप्रभातवृतान्तापातः। नापिद्वितीयः। अपरोक्षानुभवे सति तदैवमुक्त्या कृतकृत्यत्वे स्मृतिरुपापन्नभक्ते-रन्यस्य वा साधनजातस्य प्रयोजनाभावात्।

ननु 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति' 'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थं भूतगुणो हरिरित्यादिस्मृतिवचननि-चयैरियं भक्तिर्ब्रह्मभावानन्तरमेव जायत इति चेन्मैवम्। श्रीमद्गीतायां "बुद्धया विशुद्धये"त्यारभ्य 'ब्रह्मभूयाय कल्पत' इत्यन्तं ब्रह्मभावयोग्यताप्रकारः कथितः। तथा सति ब्रह्माहमिति नैश्चल्येनावस्थानाय लब्धयोग्यताको ब्रह्मभूतः सन् परां भक्तिं लभतेऽनन्तरं 'भक्त्या मामभिजानाति' इत्युपसंहारश्लोकेन भक्त्या मां तत्त्वतो ज्ञात्वा मां प्रविशते परमानन्दस्वरूपतया मुक्तो भवतीत्याशयेन मोक्षा-नन्तरं भक्तिरितिनिरंकुशकल्पनापातात्। यत्तु आत्मारामाश्चेत्युक्तं तदपि स्वपर-प्रयत्नाभ्यां व्युत्थितस्य योगिनो लोकातीतसौन्दर्यादिगुणशालिश्रीभगवद्विग्रहदर्शना-भिलाषवत्त्वेऽपि ज्ञानतुरीयभूमिकास्थाद्वैतीभूतयोगिनस्तथाभिलाषवत्त्वे मानाभावात्। नापि चतुर्थः। उपासनाया अपि ज्ञानाकारत्वेनैव मुक्तिसाधनत्वस्यानुपदमुपपाद-यिष्यमाणत्वात्। नापि पंचमः। इष्टापत्तेः। नापि षष्ठः। प्रकारान्तस्याशक्य-समर्थनत्वात्। शक्यत्वे चानयैव दिशा निराशसंभवाच्च।

## उपासनाया अपि तादृशमुक्त्यहेतुत्वोपपत्तिः।

केचित्तु 'ओमित्येवं ध्यायथात्मानम्' 'आत्मानमेव लोकमुपासीत' आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्योनिदिध्यासितव्यः' इत्यादिश्रुतिषु ध्यानरूपोपासनस्य विधानान्निदिध्यासितव्य इत्यनेनैकार्थ्यं भवत्यत एव 'नायमात्मा प्रवचनेन लभ्यो न मेधयेति' केवलवेदनं न 'मेधयेति' निषिध्य 'यमेवैष वृणुते तेनैवलभ्यस्तस्यैष

आत्मा वृणुते तनूं स्वामि'त्यनेन भक्तिरूपापन्नानुध्यानेनैवात्मा लभ्य इत्यर्थः संपद्यते। इत्थञ्च 'तमेवविद्वानमृत इह भवति' इत्यादिश्रुतीनां तमेवमुपासकोऽमृत इह भवतीत्यर्थकत्वेन वेदान्तविहितवेदनरूपध्याननिष्ठमुमुक्षोस्तस्मिन्ध्याने निरतिशय-प्रीत्या परमपुरुषलाभान्मुक्तिरित्याहुस्तन्न। तदिदं ध्यानं स्वस्वरूपानुसंधानमात्रं वा, तैलधारावदविच्छिन्नसंतानरूपा वा, स्मृतिर्वा। नाद्यः। तादृशानुसंधानस्य ध्यातृध्यानध्येयेतित्रिपुटीरूपतया संप्रज्ञातसमाधिपर्यन्तगतत्वेनैवोपक्षयात्।

ननु 'ब्रह्मविद्ब्रह्मैव भवतीति' ब्रह्मविद्विषया श्रुतिरपि वेतृवेद्यवेदनेतित्रि-पुटीप्रतिपादिका केवलाद्वैतज्ञानाल्लयमुक्तावनुपपन्ना सती भक्तिलभ्यनित्यानंदब्रह्मा-कारविग्रहवन्नित्यधामस्थमुक्तचैतन्यं बोधयतीति चेन्न। 'अन्यदेव तद्विदिताद-थोऽविदितादधि' 'यस्मामतं तस्य मतं मतं यस्य न वेद सः' इत्यादिश्रुतिव्याको-पभयेन ब्रह्मणोविदिक्रियायाअपि विषयत्वानंगीकारात्। न चाविषयत्वे शास्त्रा-प्रामाण्यप्रसंगः, शास्त्रस्याविद्यकभेदनिषेधपरत्वेनादोषात्। अखंडाकारवृत्तिविषयत्व-स्याप्याविद्यकत्वनिश्चयेनकेवलस्यैव तत्वनिश्चयाच्च। तदुक्तं—'अन्वेष्टव्यात्मविज्ञानात्प्रा-क्प्रमातृत्वमात्मनः अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः' इति। अनुसंधान-काले तथाविधाद्वैतबोधकप्रमाणाभावात्। नापि द्वितीयः। ध्रुवायाः स्मृतेर्दर्शन-पर्यवसायित्वेन दर्शनं च साक्षात्कारः प्रत्यक्षज्ञानमितिनाममात्र एव विवादेन ज्ञाना-न्मुक्तिरिति त्वयापि स्वीकारात्।

एतदुक्तं भवति, 'ननु ज्ञानं विना मुक्तिर्नास्ति युक्तिशतैरपि। तथा भक्तिं विना ज्ञानं नास्त्युपायशतैरपी'ति। भक्तेर्ज्ञानं ततो मुक्तिरिति सिद्धान्तस्त-थापि तापपापशान्त्यर्थिभ्यां विभिन्नपुरुषाभ्यां यथा गंगादिस्नानेविहितेसति ताप-शान्त्यर्थिनोऽपिपापशान्तिः पापशान्त्यर्थिनश्च तापस्यापि शान्तिस्तथा ज्ञानिनां वशिष्ठादीनां प्रथम भक्तिस्ततो ज्ञानान्मुक्तिः। भक्तानां नारदादीनामपि भक्त्या-ज्ञानान्मुक्तिरिति रहस्यम्। तदुक्तम्—भक्त्या ज्ञानमवाप्यैव ये मुक्ता ज्ञानिनो हि ते, यैस्तु संसारविरसैर्भक्त्यर्थं हरिराश्रितः। ततो भक्तिप्रभावेण स्वभावाज्ज्ञान-मुद्गतम्। तज्ज्ञानं प्राप्य मुक्ता ये ते भक्ता इति स्मृताः' एवं 'द्वैतं मोहाय बोधात्प्राक् प्राप्ते बोधे मनीषया। भक्त्यर्थं कल्पितं द्वैतमद्वैतादपि सुन्दरम्। पारमार्थिकमद्वैतं द्वैतं भजनहेतवे। तादृशी यदि भक्तिश्चेत्सा तु मुक्तिशताधिका'

इत्यादिवचनप्रामाण्यात्क्वचिन्मुक्त्यन्तरमुपपादितापि भक्तिः कल्पितद्वैतमाश्रित्यैवेति न पारमार्थिकावस्थायामिति तत्त्वम्।

## प्रेमसाधनवादिमतनिरासः

अन्ये तु 'सात्वस्मिन्परमप्रेमस्वरूपा' 'सा च परानुरक्तिरीश्वरे' इति नारदशांडिल्यसूत्राभ्यां पराभक्तिः परप्रेमस्वरूपा। तच्च प्रेम 'रत्याख्य- सरसः प्रेम' इत्युक्त्या रसस्वरूपम्। तस्य च प्रेमरसस्य 'रसो वै सः' 'निर्गुणं निर्मलं नित्यं निरुपाधिभयोज्झितम्। परमानन्दसद्रूपं प्रेम ब्रह्मैव केवल'मिति श्रुति–पुराणसंहितावचनाभ्यां ब्रह्मस्वरूपत्वाभ्युपगमेन सजातीयप्रेमरसभक्त्या रसात्मकब्रह्मैकीभावो मुक्तिर्नदीजलधिसंगमवदित्याहुस्तन्न, यतस्तादृशप्रेम्णो ब्रह्मस्वरूपत्वे 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दंब्रह्म'त्यादिश्रुत्या ब्रह्मणो ज्ञानस्वरूपत्वेन तादृशप्रेमलक्षणायाः फलभक्तेरपि ज्ञानरूपत्वे सिद्धे ज्ञानेनैव मुक्तिरित्यायातम्। यत्तु 'न मेधया न बहुना श्रुतेन' 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्' 'प्रीयतेऽमलया भक्त्या हरिरन्यद्विडंवनम्' इत्यादिवचनैरितरनिरपेक्षया अमलया भक्त्यैव हरिप्रसादेन कैवल्यमित्युक्तं तदपि न विरोधकरम्। यतो 'यमेवैषवृणुते तेन लभ्य' इत्युक्त्या आत्मलाभयोग्यतामापादयतीत्युक्तं, तथा प्रीयते इत्युक्तं न तु मुक्तिं ददातीत्युक्तम्। एवं च यथा सदाचारादिसद्गुणसंपन्नब्रह्मचारिणे प्रसन्नो गुरुस्तस्य तत्त्वज्ञानाय शास्त्रतत्त्वमुपदिशति ततश्च शास्त्रतत्त्वज्ञशिष्यः पंडितो भवति तथा स्वस्ववर्णाश्रमधर्माचारनियमवते गुरूणामपि गुरुः परमकृपालुर्भगवान् स्वीयाममलां भक्तिं ददाति, तया च भक्त्या भगवत्तोषानन्तरं तत्त्वज्ञानान्मुच्यते इति युक्तमुत्पश्यामः। तदुक्तं महर्षिणा पराशरेण– 'वर्णाश्रमाचारवतापुरुषेण परः पुमान्। विष्णुराराध्यते पंथा नान्यस्तत्तोषकारणमि'ति।

## कर्मज्ञानसमुच्चयवादनिरासः

एतेन कर्मज्ञानसमुच्चयस्यैव मुक्तिजनकत्वमिति केषांचिन्मतं प्रत्युक्तं वेदितव्यम्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेने'त्यादिश्रुतौ कर्मणां विविदिषाजनकत्वेन मुक्तिजनकत्वासंभवात्। शब्दबुद्धिकर्मणां विरम्यव्यापारासंभवेन विविदिषामुत्पाद्य मुक्तिजनकत्वेमानाभावात्। कर्मणामविद्या-

वद्विषयत्वेन 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति विद्याविद्ययोः पृथक्फलश्रुतेश्च साक्षाज्ज्ञानस्यैव मुक्तिफलकत्वमितिसिद्धम्।

## ज्ञानभूमिका विचारः।

तच्च ज्ञानं-शुभेच्छा, विचारणा, तनुमानसा, सत्त्वापत्तिः, असंसक्तिः, पदार्थाभाविनी, तुरीया चेति भूमिका भेदात्सप्तविधम्। तदुक्तं वेदान्तसिद्धान्तादर्शे यथा 'भूमयः सप्त तद्वत्स्युर्ज्ञानस्योक्ता महर्षिभिः। शुभेच्छा ननु तत्राद्या ज्ञानभूमिः प्रकीर्तिता ॥१॥ विचारणा द्वितीया तु तृतीया तनुमानसा। सत्त्वापत्तिश्चतुर्थी स्यादसंसक्तिश्च पंचमी। पदार्थाभाविनी षष्ठी सप्तमी चाथ तुर्यगा ॥' इति। तत्र नित्यानित्यवस्तुविवेकपुरस्सरा फलपर्यवसायिनी मोक्षेच्छा विविदिषादिपदवाच्या शुभेच्छा। अस्यामवस्थायां सदसद्विवेकतो वैराग्यद्वारा फलपर्यवसायिनी मोक्षेच्छामात्रं भवति। गुरुमुपसृत्य वेदान्तवाक्यविचारणात्मकश्रवणमननात्मिका वृत्तिः सुविचारणा। निदिध्यासनाभ्यासेन मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यता तनुमानसा। अत्र निदिध्यासनपदेन ध्यानोपासनापरभक्त्यादयो गृह्यन्ते। एतास्तिस्रो भूमिका जाग्रदवस्थाः सन्ति। यतोऽत्रजीवब्रह्मभेदज्ञानं सुस्पष्टं तिष्ठति। अस्यामवस्थायां स्थितः साधकोपासकभक्तादिपदैरुच्यते न तु ज्ञानीतिपदेन। तदुक्तं तत्रैव एतस्मिन्नवस्थात्रये ज्ञानोत्पादनयोग्यतासंपद्यते न तु ज्ञानमुत्पद्यते' ज्ञानभूमिकात्वं तु ज्ञानेतरकर्माद्यनधिकारित्वे सति ज्ञानस्यैवाधिकारित्वमिति। निर्विकल्पब्रह्मात्मैकसाक्षात्कारः सत्त्वापत्तिः। अस्यामवस्थायां संशयविपर्ययरहितब्रह्मस्वरूपैकत्वापरोक्षानुभवो भवति अतएव सिद्धावस्थेयम्। ब्रह्मजाग्रद्यथार्थानुभवे सत्यपि जाग्रद्ध्यानपुरस्सरं शरीरेन्द्रियादिसंपादितसकल क्रियाज्ञानात्मिका परभक्तिमतां भक्तानां चरमावस्था। ज्ञानिनां तु स्वप्नावस्थैव, यतोऽस्यामवस्थायां ज्ञानिनां ब्रह्मसत्यं जगन्मिथ्येति भानसत्त्वेपि मायावशात्सत्यं जगदिति अनुभवो भवति। सविकल्पकसमाध्यभ्यासेन निरूद्धेमनसि निर्विकल्पकसमाध्यवस्था असंसक्तिः। इयं ज्ञानिनां सुसुप्तिभूमिका। अत्र सुषुप्तिवद्-ब्रह्माभेदो भवति। स्वयंव्युत्थाय स्वशरीरनिर्वाहादिकं च करोति। असंसक्तिभूमिकापाटवाच्चिरं प्रपंचापरिस्फूर्त्यवस्था पदार्थाभाविनी। अस्यामवस्थायां स्थितः स्वदेहक्रियादिकमपि न कुरुते परप्रयत्नेन व्युत्तिष्ठते। ब्रह्मध्यानावस्थस्य पदार्थान्तरापरिस्फूर्तिस्तुरीया। अस्यामवस्थायां म

स्वतः नापि परप्रयत्नेन व्युत्तिष्ठते केवलाद्वितीयावस्थो भवति। तस्मान्न भक्तेश्चरमसाधनत्वं न वा भक्तिज्ञानयोः सामकक्ष्यञ्चेति।

## अक्षरस्य ब्रह्मधामत्ववादिमतन्निरस्य तस्य ब्रह्मत्वनिरुक्तिः।

**अथ परा यया तदक्षरमधिगम्यते** इति श्रुत्या विद्यया अक्षर-प्राप्त्युपायत्वेनोपक्षयात्, 'अक्षरात्परतः परः' 'कूटस्थोऽक्षर उच्यते' 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति श्रुतिस्मृतिभ्यां पुरुषोत्तमस्याक्षरपरत्वनिश्चयात्। अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिं। यद्गत्वाननिवर्तन्ते तद्धाम परमं मम' इत्यक्षरस्य ब्रह्मधामत्वसिद्धेः। 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते परामि'त्यनेन ब्रह्मभावोत्तरं पुरुषोत्तमभक्ति-लाभोक्तेश्च विद्ययाऽक्षरज्ञानेनाविद्यानाशे ब्रह्मभावोत्तरं पुरुषोत्तमभक्तिर्जायते इति विद्याया अक्षराख्यब्रह्मधाममात्रप्रापकत्वेनापि ब्रह्मविद्ब्रह्मैव भवति' इत्यादि श्रुति-समन्वये पुरुषोत्तमप्राप्तिरूपचरममुक्तिसाधिका तु परा भक्तिरेवेति केषांचित्पद्धतिर्न सत्पद्धतिः श्रुत्याक्षरपुरुषोत्तमयोरैक्यावगमात्। तथा हि गार्गिब्राह्मणे द्युपृथिव्या-द्युपलक्षितनिखिलब्रह्मांडस्याक्षर ओतप्रोतत्वायारभ्य 'एतस्यैवाक्षरस्य प्रशासने सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यक्षरप्रशासने सूर्यादिस्थितिमुक्त्वा 'यो वा एतदक्षरं गार्गि विदित्वा प्रैति स ब्राह्मणः' इत्यक्षरज्ञानेनैवामृतत्वनिरूपणेनाक्षरब्रह्मैव परंब्रह्मेत्यायातमन्यथा ब्रह्मधामत्वे अक्षरस्याचैतन्येन तत्प्रशासने सूर्यादिस्थिति-कथनं सर्वथाविरुद्धयेत प्रशासनस्य चेतनकार्यत्वात्। एतेनाक्षरस्य परब्रह्मत्वनिश्चये तस्य धामत्वोक्तिरपि न संगता। धामशब्दस्य सूर्यादिप्रकाशकसर्वातिशायितेजः पुंजरूपत्वेन परब्रह्मत्वनिश्चयात्।

ननु 'परं ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इत्यादिश्रुतावक्षराख्यपरज्योतिःसंपत्यनन्तरं पुरुषोत्तमप्राप्तावुपसंपद्य स्वेन रूपे-णाभिनिष्पद्यत इति पूर्वापरीभावेनाक्षराख्यज्योतिर्धामप्राप्तिपरत्वेनैव पुरुषोत्तम-प्राप्तिः सूचितेति चेद्भ्रांन्तोसि। यतस्तत्रमुखंव्यादाय स्वपतीत्यत्र यथा मुखव्यादान-शयनयोरेककालिकत्वं तथा प्रकृतेपि परंज्योतिः प्राप्तिरेव स्वस्वरूपावाप्तिरिति स्वारस्यात्। यच्च विद्ययाक्षरज्ञानेनाविद्यानाशे ब्रह्मभावोत्तरं परयाभक्त्या पुरुषोत्तम-प्राप्तिरूपचरममुक्तिर्भवतीत्युक्तं तदपि न विचारचारुतरम्। 'तद्धैतत्पश्यन्नृषिर्वामदेवः

प्रतिपेदे अहं मनुरभवं सूर्यश्चेति' श्रुत्या शयानोऽधीते इत्यत्र यथा शयनाध्ययनयो-रनान्तर्यं प्रतीयते तथा पश्यन्प्रतिपेदे इत्यत्रापि ब्रह्मप्रत्यक्षामृतीभावमध्ये साधना-न्तरस्थित्यभावेन विद्यया सर्वात्मनाऽद्वैतीभावस्य चरमामृतत्वे कस्यचिद्वैमत्यसंभवात्। अथैवमपि 'अक्षरात्परतः परः' 'यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः। अतो-स्मिलोकेवेदे च प्रथितः पुरुषोत्तमः।' इतिश्रुतिस्मृत्योरक्षरपुरुषोत्तमयोरैक्येऽप्रा-माण्यं दुर्वारमेवेति चेन्नैवम्, तत्राक्षरशब्दस्यार्थान्तरपरत्वेनादोषात्। तथा हि—'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इत्यनेन समस्तस्थूलभूतसमष्टिरूपा-त्क्षरात्तत्कारणभूतमूलप्रकृतिमायारूपादक्षरात्, समस्तस्थूलसूक्ष्मभूतसमष्टिरूपात्क्ष-रात्, क्षरणशीलानेकशरीरेषु कूटवत्स्थित्या जीवोऽक्षरः तस्माद्वापरः पुरुषोत्तमः इत्येतादृशक्षराक्षरपरः चराचरजगच्छासकोहमीश्वरः इति गीतायामर्जुनो भगवता सूचितः। अत एवाक्षरात्परतः पर इति श्रुतेरपि परतः अक्षरादव्याकृताद्भू-तात्परः पुरुष इत्येवार्थः श्रेयानन्यथा त्वन्मतेऽप्यक्षरात्परस्य पुरुषोत्तमस्यैव स्वीकारेणाऽक्षरात्परधाम्नः परस्य पुरुषोत्तमानन्यूनस्यान्यस्य कस्यचिदभावेनाक्ष-रात्परो यः कश्चित्तस्मादपि परः पुरुषोत्तम इत्यर्थासंगतिर्ध्रुवैव श्रुत्युक्ताक्षरस्य परब्रह्मत्वमधस्तादुपपादितम्।

अत एव उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति पुरुषोत्तमस्य परमत्ववि-शेषणमपि न विरुध्यते, यतः 'प्रतर्दनोह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम प्राणोस्मि प्रज्ञात्मा तं ममायुरमृतमित्युपास्स्वेति' श्रुताविन्द्रस्यस्वात्मानममृतत्वकथनं यथा ब्रह्मैक्येनैवोपपद्यते तथा प्रकृतेऽपि श्रीकृष्णोऽक्षरब्रह्माभिन्नत्वेनैव परमात्मा भवितुमर्हति इति युक्तम्। तेन 'यदादित्यगतं तेजो जगद्भासयतेखिलम्। यच्चन्द्र-मसियच्चाग्नौतत्तेजो विद्धि मामकम्' इति चन्द्रादित्यादिगततेजसः स्वीयत्वेनोक्तिः श्रीकृष्णस्य सुसंगता भवत्यन्यथा मुंडके 'लक्ष्यंतदेवाक्षरं सौम्य विद्धि' इत्यनन्तरं 'ब्रह्म तल्लक्ष्यमुच्यते' इत्यक्षरस्य ब्रह्मत्वमुक्त्वा 'यस्मिन्द्यौः पृथिवी चान्तरि-क्षमोत' मित्यादिना तस्मिन्नक्षरे द्युपृथि- व्याद्योतत्वं निरूप्य 'तमेव भान्तमनुभाति सर्वं' मित्यक्षरप्रकाशेनैव सूर्यचंद्रादि सकलप्रकाशकथनेन, उदाहृतगार्गिब्राह्मणेप्ये-तस्यैवाक्षरस्याज्ञया सूर्यादिधृतेरुक्त्या चाक्षरस्य परब्रह्मत्वमुक्तम्। कठवल्यामन्यत्रापि च 'पुरुषान्नपराकाष्ठा न परा गतिः' 'परात्परं पुरुषमुपैति दिव्यम्' 'अक्षरात्परतः परः' इत्यादिना पुरुषस्यैव परत्वमुक्तम्। एवं गीतायामपि 'यदादित्यगतं तेजः'

इत्यादिभिः श्लोकैः सूर्यादिनिष्ठतेजो यस्य स पुरुषोत्तमः परमात्माहमित्यक्षर पुरुषोत्तमयोर्भेदे सर्वा एव श्रुतिस्मृतयः परस्परविरोधेन व्याकुलीभवेयुः यदि तयोरैक्यं न स्यादित्यक्षरब्रह्मैव परंब्रह्म. तस्यैव सर्वव्यापनात्पुरुषत्वमपि, तस्माज्ज्ञानेनाविद्यानाशेऽक्षरब्रह्मज्ञानोत्तरं भक्त्या पुरुषोत्तमप्राप्तिरिति रिक्तं वचः ।

## ज्ञानस्य भक्तिव्यापारत्वनिरासः

अथास्त्वक्षरपुरुषोत्तमयोरैक्यं तथापि ज्ञानव्यापारकभक्तिरेव मुक्तिहेतुः तथा सति ज्ञानमोक्षयोरव्यवहितपूर्वापरीभावेपि न क्षतिरिति चेद्धन्त, अनुमितिं प्रति व्याप्तेः प्रयोजकत्वेन परामर्शस्य तत्कारणत्वद्भक्तेरपि प्रयोजकत्वसिध्द्या भक्त्या ज्ञानं ततो मुक्तिरिति स्वीकृत्यापि भक्तिरेव साक्षात्साधनं न ज्ञानमिति बलान्निगृहीतोसि । किञ्च 'भजति सोऽमृतो भवति' 'भक्त्या मामभिजानाति' इत्यादौश्रुत्यादीनां काशीमरणान्मुक्ति' रित्यादौ काशीमरणादेः प्रयोजकत्ववद्भक्तेरपि प्रयोजकत्वं नास्माभिरपाक्रियते उक्तं चकैवल्योपनिषदि 'श्रद्धाभक्तिध्यानयोगादवेहीति' 'श्रद्धया भक्तिस्ततो ध्यानं ततोज्ञानं ततश्च तमेव विदित्वातिमृत्युमेति' इत्यादि श्रुतिप्रतिपादितज्ञानान्मुक्तिरिति सर्वशास्त्रसिद्धान्तः । अपि च 'आप्नोति स्वाराज्यं सर्वेदेवा बलिमस्मै हरन्तीत्यादिना भक्तेस्तत्तल्लोकाधिष्ठातृसगुणब्रह्मसालोक्यादिप्राप्तिरवान्तरफलम्, ज्ञानस्य तु'न तस्य प्राणाउत्क्रामन्तीहैव समवलीयन्त' इति नित्यकूटस्थनिर्गुणब्रह्मलयः फलमितिनिरवकाशादपि तज्ज्ञानादेव मुक्तिरिति सिद्धम् । 'ज्ञानान्मुक्तिः' । प्रमाणप्रमेयादिषोडशपदार्थ तत्त्वज्ञानान्निः श्रेयसाधिगमः, इत्यादिकपिलाक्षचरणप्रणीतसूत्रप्रामाण्यादपि ज्ञानान्मुक्तिः सिध्यतीति ।

## क्रमदिग्दर्शनपुरस्सरं ज्ञानान्मुक्तिरित्युपसंहारः

इत्थञ्च ब्रह्मविद्ब्रह्मैव भवति 'ज्ञानादेव तु कैवल्यम्' 'ऋतेज्ञानान्न मुक्तिः' 'यथोदकं शुद्धेः सिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम' 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' 'विद्ययामृतमश्नुते' 'अथ परा यया तदक्षरमधिगम्यते' 'तमेव विदित्वातिमृत्युमेति' इस्यादिश्रुतिसिद्धज्ञानलभ्यकैवल्ये न कस्यचिद्विमतिः । **तत्क्रमस्तु**-यदा सदसद्विवेकादिसाधनचतुष्टयसंपन्नस्तत्त्वजिज्ञासुरधिकारी ब्रह्मनिष्ठगुरुमुपसृत्य तमनुसरति स च परमकृपालुस्तदा अध्यारोपापवादन्यायेन तत्त्वंपदार्थौ शोधयित्वा तत्त्वमसीत्यादिवाक्यानामखंडार्थमवधारयति, तदुक्तं गीतायामर्जुनं प्रति श्री भगवता 'तद्विद्धि प्रणिपातेन

परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन' इति। एवमखंडार्थेऽवधारिते सत्यधिकारिणे सविश्वासं गुरुवेदान्तवाक्यश्रवणान्निरन्तरानन्यतत्परतया ईश्वराराधनभक्तिजन्यतदीयकृपया श्रद्धाख्यगौः पुण्यचर्वणं कृत्वा परमधर्म (परभक्ति) दुग्धं क्षरति, ततश्च तस्माद्दुग्धात् कठिनतरसाधनेन विमलवैराग्यः नवनीतं निःसरति, अनन्तरं शुभाशुभकर्मदाहेन योगाग्निरुद्भवति। तेनैव योगाग्निनोक्तवैराग्यनवनीताज्ज्ञानघृतं लभ्यते। अथ च तुरीयावस्थावर्तिका ज्ञानघृते च संयोज्य चित्ताख्यदीपिकायां स्थापनाद्दीपिकाज्वलति, तस्या एव दीपिकायाः प्रकाशेन 'यथैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि' त्यादिश्रुतिसिद्धब्रह्मविवर्तसमस्तकार्यजातस्य मिथ्यात्वावगमेऽप्यनादिविषयवासनया पुनःपुनराकृष्यमाणस्यापि क्रमशोविषयव्यावृत्तिर्भवति, यथा काचिद्बाला पितृगेहात्पतिगृहगमनसमये पितृगृहपरायणा सती सर्वथा गन्तुमनिच्छन्ती कथमपि गता चेन्मुहुर्मुहुरागन्तुमुत्सुकापि च क्रमश स्वकर्तव्य जानन्ती तत्रैव शान्तहृदया निवसन्ती पश्चात्पितृगृहागमनाय भृशमाहूतापि गन्तुं नैवेहते तथोक्तप्रकारेण तादृशविदुषः अहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दानन्ताद्वयब्रह्मास्मीत्यखंडाकाराकारिता चित्तवृत्तिरुदेति, सा च वृत्तिश्चित्प्रतिविम्बसहिता प्रत्यगभिन्नं ब्रह्म विषयीकृत्य तद्गताज्ञानं बाधते। ततश्च कारणनाशे कार्यनाशस्यापि नैयत्येनाखिलद्वैतजात कारणाज्ञानबाधे तत्कार्यभूतसकलद्वैतजातसहितब्रह्माकाराखंडवृत्तेरपि बाधे सति दर्पणाभावे मुखमात्रत्ववत्प्रत्यगभिन्न परब्रह्मस्वरूपेणावस्थितो विद्वान्कैवल्यावस्थो भवति। उक्तञ्च—

**तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।**
**अविद्यासहकार्येण नासीदस्ति भविष्यति ॥ १ ॥**

**॥ इति शम् ॥**

ब्रह्मपुरवसतिवासी श्रीश्यामसुन्दरो हि मैथिलोविद्वान्।
कृतवानिमं निबंधं बुधजनमनस्तुष्टिभावेन ॥ १ ॥

**॥ इतिश्री श्यामसुन्दरशर्म्मविरचिते सर्ववेदान्तसारसङ्ग्रहे केवलाद्वैतदर्शने कैवल्यसाधनविचारो नामषष्ठः स्तवकः ॥**

**॥ समाप्तश्चायं ग्रन्थः ॥**

तुरीयातीतकं तत्त्वं सच्चिदानन्दविग्रहम् ।
श्रुतीनाञ्च परं लक्ष्यं हृदि मे राजतां सदा ॥ १ ॥

नित्यं तत्त्वविदां हृदा सुविदितं वेदान्ततत्त्वं परम् ।
मूर्तीनांतृतयं विधाय जगतां जन्मादिकृत्येरतम् ।
भक्तानामधिमानसं सुविशदं चिन्त्यं सदा नूतनम् ।
चिच्छक्त्या सहितं धियां वसतु मे रूपं विभोः सुन्दरम् ॥२॥

वाच्यः स्यां यदिवाऽवाच्यो विद्वद्भिरखिलैरपि ।
मयिकिञ्चिन्न तल्लेशःपरेशयमितात्मनि ॥ ३ ॥

श्रीव्यासपादं प्रथमम्प्रणम्य । श्रीशङ्करञ्चाथ सुरेश्वरादीन् ॥
रामानुजञ्चाथ महाप्रभुञ्च । मध्वञ्च निम्बार्कमथोनमामि ॥ ४ ॥

चिरविहितनिवासो यद्गृहेलालितोऽहम् ।
तनुजसदृशप्रीत्या पाठितश्चातियत्नात् ॥
सुरगुरुसमुपज्ञान् सद्गुरूनानमामि ।
मुरलिधरयुतांस्तानीड्यदामोदराख्यान् ॥ ५ ॥

जगदिशम्परप्रज्ञं षष्ठीनाथं विदाम्वरम्
लक्ष्मीनाथानथश्रीलान् सर्वविद्यान्नुमोगुरून् ॥ ६ ॥

धर्मनिष्ठांस्तथा पितॄन् नमामि मनसा सदा
एतेषां कृपया नूनं फलं लब्धमिदम्मया ॥ ७ ॥

ब्रह्मज्ञानतृषाशमाय विबुधब्रह्मर्षिसंसेविता ।
चिच्छक्तिर्निखिलेष्टदा सुरनुता **सीतापि** यत्रोद्गता ॥
श्रौतस्मार्तरहस्यविद्द्विजसरिद्योगीन्द्रवृन्दैर्वृता ।
सा पुण्याजनकप्रतिष्ठ–**मिथिला** स्यान्मे परप्रीतये ॥ ८ ॥

**इति श्रीमिथिलामहीमण्डलान्तर्गतदरभङ्गोपमण्डल ब्रह्मपुर-ग्रामवास्तव्यश्री–श्यामसुन्दरशर्म्मप्रणीत सर्ववेदान्तसार-संग्रहे ग्रन्थान्तमङ्गलम् ॥ ॐ तत्सत्परमात्मार्पणमस्तु ॥**

